[ दी ] शब्दाजन्यकाम्यसाधनताज्ञानघटितायाश्शाब्दसामग्र्या भट्टेनान-
भ्युपगमात् ।

---

[ ग ] ज्ञानप्रामाण्यस्य च तत्राभानात् बाधस्य दुर्वारतैव, तथापि सामा-
न्यतो ज्ञानग्राहकत्वनिवेशमभ्युपेत्य सम्भवाभिप्रायेणोक्तस्थल एव प्रका-
रान्तरेण बाधं सङ्गमयति ( शब्दाजन्येति ) शब्दाजन्यकाम्यसाधनताज्ञा-
नोपस्थितिघटितसमुदायपर्याप्तसामग्रीत्वस्य ज्ञानग्रहोपधायकतावच्छेदकत-
या भट्टमतासिद्धत्वादित्यर्थः ।

न च तत्र शाब्दबोधस्यानुमावित्वे तज्जनककाम्यसाधनताज्ञानो-
पस्थिते पदजन्यत्वमेव भट्टेन कल्पनीयम्, तथा च तत्साधारणसामग्री-
त्वमपि तादृशशाब्दबोधोपधायकसमुदायपर्याप्तत्वादिप्रकारेण प्रामाण्यविष-
यकज्ञानग्रहोपधायकतावच्छेदकतया भट्टाभिमतमिति वाच्यम्,—यत्कालीन-
काम्यसाधनताज्ञानोपस्थितौ पदजन्यत्वविरहो भट्टेनापि निश्चितः तत्काली-
नशाब्दबोधजनकतज्जन्यज्ञानोपस्थिते शाब्दबोधानुपधायकत्वेन भट्टाभिम-
ताया शाब्दबोधोपधायकत्वेन भट्टेनाज्ञानात् तत्साधारणसमुदायत्वव्योक्त-
प्रकारेण तदीयाभ्युपगमेऽभावात्तत्कालीनसामग्रीमादाय बाधस्य दुर्वारत्वात् ।

यदि चोक्तविशेषदर्शनदशायां तत्कालीनकाम्यसाधनताज्ञानोपस्थिति-
त्वादिरूपविशेषधर्मपुरस्कारेण तादृशोपस्थिते शाब्दबोधोपधायकतया भट्ट-
ज्ञानविषयत्वासम्भवेऽपि तादृशविशेषदर्शनशून्यतादशायामुक्तविशेषधर्मप्रका-
रेण ज्ञानदशायामपि उपस्थितित्वादिसामान्यधर्मप्रकारेण तदीयज्ञानविषय-
त्वसम्भवादुक्तरूपेण तदुपस्थितिसाधारणसामग्रीत्वं भट्टाभ्युपगमविषय एवे-
त्युच्यते, तदा चक्षुस्संयोगादिघटितव्यवसायसामग्र्या अपि सामान्यतो
ज्ञानग्रहोपधायकत्वेन भट्टाभ्युपगमविषयत्वे बाधकाभावात्सिद्धसमुदायत्व-
मपि दुरुपपादं स्यात् ।

न च प्रामाण्याविषयकज्ञानग्रहोपधायकतावच्छेदकतया भट्टमतासि-
द्धभिन्नत्वं वक्तव्यम्, व्यवसायसामग्र्या प्रामाण्यग्राहकत्वाघटितज्ञानग्रह-

[ म ] कत्वप्रकारक भट्टज्ञानं गुरुमते न्यायमते च न प्रमा, गुरुमते तस्याः प्रामाण्यग्राहकत्वस्य न्यायमते ज्ञानग्राहकत्वस्य बाधादिति वाच्यम्,—एवं सत्यनुव्यवसायसामग्र्याः सामान्यतो ज्ञानग्राहकत्वप्रकारकभट्टज्ञानस्य प्रामाण्यग्राहकत्वविषयकत्वेऽपि नैय्यायिकमते उभयोरप्येव प्रमात्वोऽप्रामाण्यानुमित्यादिसामग्रीणामेव साध्यघटकतया निषेधसाधने बाधात् । तस्मादेव रूपेण स्वाश्रयग्रहोपधायकतावच्छेदकता सामग्रीपर्याप्तधर्मस्य तादृशरूपे प्रामाण्यग्राहकतावच्छेदकत्वविशिष्टज्ञानग्राहकतानवच्छेदकत्वप्रकारकभट्टाभ्युपगमविषयतानवच्छेदकत्वं विवक्षणीयम् । चक्षुरसंयोगादितत्कारणसमुदायपर्याप्तधर्मत्वेन च व्यवसायादिसामग्रीपर्याप्तधर्मस्य स्वाश्रयग्रहोपधायकतावच्छेदकता, तादृशधर्मत्वस्य न निरुक्तभट्टाभ्युपगमविषयतावच्छेदकत्वमिति गुरुमतादिभ्रमः । उक्तशाब्दबोधसामग्रीपर्याप्तधर्मस्य पदजन्यकाम्यसाधनताज्ञानोपस्थितिनिवेशस्य पाकविशेष्यकतादृशज्ञानविषयत्वरूपयोग्यताज्ञानादिरूपतत्कारणपर्याप्तधर्मत्वेन तादृशज्ञानग्राहकतावच्छेदकता पदजन्यकाम्यसाधनताज्ञानोपस्थित्यादिपर्याप्तधर्मत्वेन च निरुक्तभट्टाभ्युपगमविषयतेति बाधो दुर्वार एव ।

न च तादृशयोग्यताज्ञानस्य भट्टमतेऽपि शाब्दधीहेतुतया तन्मतेऽपि तस्य सामग्रीशरीरे निवेशनमावश्यकम् तथा चाधिकपदजन्यतादृशयोग्यताज्ञानोपस्थितिनिवेशेऽपि * दर्शितसामग्र्या भट्टमतसिद्धत्वमक्षतमेवेति वाच्यम्, एवमपि पदजन्ययोग्यताज्ञानविरहकालीनदर्शितशाब्दसामग्रीमादाय बाधस्य दुर्वारत्वात् । ( * येन रूपेण गुरुमते सामग्रीपर्याप्तधर्मस्य ज्ञानग्राहकतावच्छेदकता तद्रूपस्य निरुक्तभट्टाभ्युपगमविषयतावच्छेदककोटिप्रवेशोऽन्यथा एवेति वाच्यम्, अधिकान्तर्भावेन पर्याप्तिघटितधर्मस्य विलक्षणया न्यूनपर्याप्त्याऽघटितत्वात् । पाठान्तरम् )

योग्यताज्ञानस्य शाब्दधीहेतुत्वेऽपि पदानुपस्थितयोग्यताया शाब्दबोधे विषयत्वानभ्युपगमात् नोक्तसामग्री काम्यसाधनताधीग्राहिकेति, तथा

[ दी ] नैवम्-शाब्दबोधे हि योग्यताज्ञानं कारणम् । सा च तेषामन्वय-प्रयोजकरूपवत्त्वम् । तेन तज्ज्ञानं प्रथमं मृग्यते । न च शाब्दबोधे तदनुप्रवेशोऽपि नियतो मानाभावात् । न हि उपस्थितत्वादेव शाब्दबोधे भानम्, उपस्थितावाधितयावत्पदार्थानामेव तथा भानप्रसङ्गात् । नियोज्यान्वयेऽपि काम्यसाधनताज्ञानस्य प्रथमं ज्ञानम्-न तु शाब्दबोधेऽपि तद्भा-नमित्यपूर्वे वक्ष्यते । क्वचिच्छिद्रेतरत्वादेरपि भानम्, एकविशेषबाधे शाब्द-बोधसामान्यसामग्र्या विशेषान्तरप्रकारकबोधजननस्वाभाव्यात् ।

---

[ ग ] तत्प्रामाण्याभ्रहेऽपि न क्षतिरिति समाधत्ते ( नैवमित्यादिना ) पद-जन्योपस्थित्यादिसत्त्वे योग्यतायाश्शाब्दबोधप्रवेशे बाधकाभाव इत्यतो नियत इत्युक्तं ।

नन्वेवं स्वर्गकामो यजेतेत्यादौ कामनाविशिष्टस्य यागे कार्यताबो-धोपयोगित्वरूपनियोज्यत्वेनान्वये काम्यसाधनताज्ञानोपयोगित्वरूपयोग्यता-याः पदानुपस्थिताया अपि अन्वयितावच्छेदकतया भानमिति तत्सिद्धान्तो भज्येतेत्यत आह ( नियोज्यान्वयेऽपीति ) ( प्रथमं ज्ञानमिति ) तैस्स्वी-क्रियत इति शेषः । तावतैवेष्टसाधनताघटकापूर्वोपस्थित्यर्थं अपूर्ववाच्य-ताया आवश्यकत्वादिति भावः । ( न तु शाब्दबोधेऽपीति ) न चैवं "इष्टसाधनताविधिपक्षे स्फुटैवानुपपत्तिः, कार्यताविधिपक्षेऽपि अन्वयप्रकार-तया साधनत्वं शाब्दमिति फलतो न विषय" इति ग्रन्थकारलेखनविरोध इति वाच्यम्, तादृशग्रन्थस्य हि फलीभूतशाब्दबोध एवेष्टसाधनताया अन्वयितावच्छेदकतया भाने न तात्पर्यं किन्तु स्वर्गसाधनत्वस्यान्वयप्रका-रतयान्वयप्रयोजकरूपयोग्यतात्मकतया तज्ज्ञानस्य फलीभूतबोधात्पूर्वमवश्यं-मङ्गीकर्तव्यतया तद्बोधकप्रमाणान्तरविरहेण शाब्दमेव ज्ञानं पूर्वमङ्गीकर्त-व्यम्, तत्रापि विधेस्तात्पर्योपगमादित्यर्थ एव । अधिकं नियोज्यान्वये वक्ष्यामः ।

नन्वेवं घटेन जलमाहरेत्यादौ पदानुपस्थितं छिद्रेतरत्वादिकमन्वयि-तावच्छेदकतया भासत इति तत्सिद्धान्तभङ्ग इत्यत आह ( क्वचिदिति )

[ ग ] ( एकविशेषबाध इति ) न चैवं यथा छिद्रे घटे जलाहरणसाधनताप्रयोज्यच्छिद्रेतरघटत्वावच्छिन्ने पदानुपस्थितेऽपि जलाहरणसाधनतान्वयधीस्तथा, काम्यसाधनताज्ञानाविषयपाके कार्यताधीविषयत्वबाधबलात्पदानुपस्थितेऽपि काम्यसाधनताधीविषयत्वविशिष्टे पाके कार्यतान्वयधीरावश्यकीति तादृशसामग्रीमाहात्म्यैव बाध इति वाच्यम्, भट्टैरधीतरबाधबलेन पदानुपस्थितार्थस्य शाब्दबोधे भानोपगमात् ।

अथैवमप्यर्थाध्याहारवादिना गुरूणाम्मते तात्पर्यसत्त्वे पदानुपस्थितस्यापि काम्यसाधनताज्ञानादेर्भानावश्यकतया बाधवारणमशक्यमेवेति चेत्; यद्रूपावच्छिन्नसमुदायपर्याप्तत्वेन प्रामाण्याविषयकज्ञानग्राहकतावच्छेदकता भट्टाभ्युपगता तद्रूपशून्यकारणान्तर्भावेन पर्याप्तत्वस्य स्वाश्रयग्राहकतावच्छेदकत्वविशेषणत्वोपगमेन सामञ्जस्यात् । गुरुमते व्यवसायसामग्रीघटकचक्षुःसंयोगादेर्मिश्रमते चानुव्यवसायसामग्रीघटकव्यवसायादेस्तद्रूपशून्यत्वात्तदन्तर्भावेन पर्याप्तस्य ज्ञानग्राहकतावच्छेदकरूपस्य संग्रहः । अध्याहृतज्ञानग्राहकसामग्र्यां पदजन्यतदुपस्थितेरधिकाया भट्टमते निवेशोऽपि तन्मतासिद्धकारणस्य गुरुमतेऽनिवेशाद्गुरुमतसिद्धतादृशसामग्रीपर्याप्तज्ञानग्राहकतावच्छेदकं रूपं न निरुक्तरूपशून्यकारणान्तर्भावेन पर्याप्तमिति तद्रूपावच्छिन्नग्राह्यत्वेऽपि प्रामाण्यस्य न बाधः ।

न च तादृशपदजन्योपस्थितित्वादिशून्यपदाजन्योपस्थितिमन्तर्भाव्य गुरुमतसिद्धज्ञानग्राहकतावच्छेदकरूपस्य पर्याप्तत्वान्न तादृशधर्मव्यावृत्तिरिति वाच्यम्,—पदाजन्योपस्थितेरपि विशेष्यतावच्छेदकप्रकारकज्ञानादिविधया भट्टमते तादृशशाब्दबोधहेतुत्वेन तादृशविशेष्यतावच्छेदकप्रकारकज्ञानत्वादिधर्मवत्त्वेन निरुक्तरूपशून्यताविरहात् ।

वस्तुतो गुरुमतेऽपि पदाजन्यार्थोपस्थितेस्तत्तदर्थोपस्थितित्वेन शाब्दसामग्रीघटकत्वं नापेयते, तात्पर्यादिज्ञानस्य तत्तदर्थविषयतानियमेन तद्विशेषणैवोपपत्तेः; तथा च गुरुमतसिद्धसामग्रीघटकनिखिलकारणाना भट्टमते-

[ ग ] प्युक्तसामग्रीघटकत्वं निर्विवादमेवेत्युक्तरीत्या सामञ्जस्यम् । ज्ञाततालिङ्गकानुमितिसामग्रीघटकासिद्ध्यभावबाधविशेषाभावादीनां प्रामाण्याविषयकज्ञानग्रहोपधायकभट्टमतसिद्धसामग्र्यामनन्तर्भावात् तादृशसामग्र्यास्तन्मते परिग्रह् । अतो ज्ञाततालिङ्गकपरामर्शस्य ज्ञातत्वप्रकारकोपस्थितेर्वा विना प्रामाण्याविषयकज्ञानग्रहोपधायकपदाजन्योपस्थितिघटितान्वयबोधसामग्रीघटकत्वेऽपि न क्षति । एवञ्च पदानुपस्थितायाः अन्वयप्रयोजकरूपात्मकयोग्यतायाः योग्यताज्ञानबलादेव शाब्दबोधे मानस्वीकारेऽपि तादृशयोग्यताज्ञानस्य भट्टमतेऽपि शाब्दबोधहेतुतया तत्सामग्रीघटकत्वेन तादृशयोग्यताघटकानां पदजन्योपस्थितेर्भट्टमतेऽधिकायास्तादृशयोग्यताविषयकशाब्दबोधेऽपेक्षितत्वेऽपि उक्तरीत्या तादृशसामग्र्या वारणसम्भवात्, शाब्दबोधे तात्पर्यांसत्त्वे योग्यताज्ञानबलाद्योग्यताभानं निर्युक्तिकमिति वस्तुगत्यनुरोधेन अन्यकृता तन्निराकृतम् ।

अथैवमपि सामग्र्यघटिते प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन यद्भट्टमतसिद्धं तदन्वयावच्छिन्नमात्रत्वरूपसाध्येऽध्याहृतज्ञानविषयकज्ञानवानात्मेत्याद्याकारकशाब्दबोधाविषयतया प्रामाण्यस्य गुरुमते बाधो निराबाध एवेति चेत्? तत्कल्पे शाब्दान्वयित्वेन तादृशज्ञानस्य विशेषणीयत्वात् ।

यत्तु तादृशशाब्दबोधस्यानुभाविकत्वे भट्टेनापि पदाध्याहारकल्पनया तादृशबोध उपपादनीय इति स शाब्दबोध उक्तरूपेण भट्टमतसिद्धोऽपीति समाधानम्, तदसत्-यत्र पदजन्याया ज्ञानोपस्थितेरभाव उभयवादिसिद्धस्तत्रान्वयबोधे ज्ञानविषयतायाः भट्टानभ्युपगतत्वात् तदभावत्वमादाय बाधस्य दुर्वारत्वात्, ज्ञानभासकसामग्र्यनन्तरोत्पन्नं ज्ञानं ज्ञानाविषयकमिति सामान्यतोऽभ्युपगम —अयं घट इत्याकारकस्वप्रकाशात्मकव्यवसायमपि विषयीकरोतीति तादृशाभ्युपगमव्यावृत्तरूपेणैवाभ्युपगमस्य निवेश्यत्वात् ।

वस्तुतस्तु यत्रासत्तेः पदार्थान्तरस्य पदादुपस्थितिः ज्ञानस्य चान्यत उपस्थितिस्तत्राप्युपनीतभानस्थलीयो ज्ञानान्वयबोधो भट्टाभ्युपगतः, परन्त्वसौ गुरुमते तात्पर्यादिज्ञानघटितसामग्रीजन्य शाब्दधर्मत्यनुव्यव-

( दी ] न च स्वर्गकामकर्तव्यताबोधविषयो यागविषयकं कार्यमिति वेदजन्यं ज्ञानं गुणो ज्ञानत्वादित्यनुमानादिना ग्राह्यज्ञानप्रामाण्याग्रहाद्बाधः, वेदजन्यतादृशज्ञानस्य भट्टनये शशविषाणकल्पतया तद्ग्राहकसामग्र्या भट्टेनानभ्युपगमादिति वाच्यम्,—अन्यथाख्यातिवादिनस्तस्य शशविषाणं द्रव्यं विषाणत्वादित्यनुमानादौ विरोधाभावात् ।

---

[ ग ] भावविषय , भट्टमते त्वसंसर्गाग्रहपदार्थोपस्थित्यात्मकसामग्रीमात्राधीन उक्तानुव्यवसायविषयः, एतावतैव च शब्दादनुपस्थितस्यार्थस्य शाब्दबोधेऽप्रवेश इति भट्टमतसिद्धान्तस्योपपत्तिरिति कथिताध्याहृतार्थविषयकशाब्दबोधः प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन च भट्टमतसिद्ध एवेति बोध्यम् । आनुमानादिनेत्यादिना तादृशशाब्दबोधस्मृतिसामग्रीपरिग्रहः । (ग्राह्यज्ञानेति) तादृशवेदजन्यज्ञानेत्यर्थः ( बाध इति ) गुरुमत इत्यादिः ।

इदमुपलक्षणम्-मनस्संयुक्तसमवायजन्यं घटमहं जानामीति ज्ञानं गुणो ज्ञानत्वादित्यनुमानादिना ग्राह्यज्ञानप्रामाण्याग्रहात् मिश्रमते बाध इत्यपि द्रष्टव्यम् ।

( वेदजन्यतादृशज्ञानस्येति ) मनस्संयुक्तसमवायजन्यस्योक्तज्ञानस्यापि तथात्वं बोध्यम् ( तद्ग्राहकेति ) तादृशज्ञानग्राहकेत्यर्थ ( भट्टेनानभ्युपगमादिति ) तथा च तादृशसामग्र्या निरुक्तरूपेण भट्टमतसिद्धा या सामग्री तद्भिन्नत्वेन तज्जन्यग्रहस्य साध्यघटकयावद्ग्रहान्तर्गतत्वादिति भावः ( इत्यनुमानादौ विरोधाभावादिति ) तथा च यथा प्रसिद्धविषाणे शशीयत्वावगाहिन्याः शशविषाणं द्रव्यमित्याकारकानुमितेर्भट्टमतसिद्धतया तत्सामग्र्यपि तन्मतसिद्धा, तथा स्वर्गकामनियोज्यकं यागविषयकं कार्यमित्याद्याकारकसामग्र्यन्तरजन्यबोधस्य वेदजन्यत्वांशे भ्रमरूपतया भट्टाभ्युपगतायाः उक्तानुमित्यादिसामग्र्यपि प्रामाण्याविषयकज्ञानग्रहजनकतया भट्टमतसिद्धैवेति तद्ग्राह्यत्वेऽपि तादृशज्ञानप्रामाण्यस्य न बाध इति भाव. ।

[ दी ] भट्टमतासिद्धज्ञानग्राहकताकशाब्दानुमितिस्मृतिसामग्रीभिन्नत्वेन

---

[ ग ] उक्तानुमित्यादिसामग्र्या भट्टानभ्युपगतत्वाभिमानिनो विशेषणान्तरप्रवेशेनोक्तबाधसमाधानमुपन्यस्यति ( भट्टमतासिद्धेति ) उक्तानुमित्यादिसामग्र्या भट्टमतासिद्धज्ञानग्राहकताकतया व्यावृत्तिः । ज्ञाततालिङ्गकानुमितिसामग्र्या भट्टमते संग्रहाय ग्राहकताकान्तं सामग्रीविशेषणम् । तस्याश्च ज्ञानग्राहकता न भट्टमतासिद्धेति तत्संग्रहः । भट्टमतासिद्धसामग्र्यास्तन्मतेऽप्रसिद्ध्या तन्मतसंग्रहाय भट्टमतासिद्धत्वं सामग्रीविशेषणमुपेक्ष्य भट्टमतासिद्धज्ञानग्राहकताकत्वपर्यन्तं तद्विशेषणमुपात्तम् । तादृशी च सामग्री तन्मते घटाद्यनुमितिसामग्र्येव प्रसिद्धा, ज्ञानग्राहकतया भट्टमतासिद्धं यत्तदन्यत्वस्य तत्र भट्टमतेऽपि सत्त्वात् । भट्टमतासिद्धज्ञानग्राहकताकसामग्रीसामान्यभेदनिवेशे गुरुमिश्रमतासंग्रहः, व्यवसायानुव्यवसायसामग्र्योर्ज्ञानग्राहकतया भट्टमतसिद्धत्वादिति शाब्दानुमितिस्मृतीनामुपादानम् । तासां च प्रत्यक्षान्यत्वेनैव निवेशः, न तु विशिष्य, तेनानुमितौ ग्राहकान्तविशेषणेनैव भट्टमतसंग्रहे शाब्दादिसामग्रीसामान्यभेदनिवेशेऽपि क्षतिविरहात्तत्सामग्र्यां ग्राहकान्तविशेषणवैयर्थ्यमित्यपि समाहितम् । अतीन्द्रियगुरुत्वादिविषयकघटितप्रामाण्यं पक्षाद्बहिर्भावनीयम्, तेन गुरुमते तादृशप्रामाण्याश्रयव्यवसायसामग्र्या भट्टमतासिद्धज्ञानग्राहकताकपरोक्षसामग्रीत्वनियमेऽपि गुरुमते न बाधः। अथवा ज्ञानांशे परोक्षस्य सामग्री विवक्षणीया । ज्ञानांशे परोक्षत्वं च ज्ञानविषयकज्ञानजन्यत्वम् । गुरुत्वादिप्रकारकव्यवसायस्यापि ज्ञानविषयकज्ञानाजन्यतया तत्सामग्र्या अपि गुरुमते संग्रहः । एवं च दर्शिताकारानुव्यवसायविषयकोपनीतमानसामग्र्या ग्राह्यज्ञानप्रामाण्यग्रहेऽपि न मिश्रमते बाधः, तादृशोपनीतमानेऽपि उक्तानुमित्यादिवद्भिन्नकस्य ज्ञानांशे परोक्षत्वस्य सत्त्वात्तत्सामग्र्या उक्तविशेषणेन व्यावृत्तेः । एतन्मते दर्शितपदाजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या अप्यनेनैव विशेषणेन व्यावृत्तेस्तद्वारणाय दर्शितप्रयासो नास्तीति बोध्यम् ।

एवं घटज्ञानकालीनघटज्ञानवानहमित्याद्याकारकघटज्ञानांशोपनीतमानात्मकघटज्ञानानुव्यवसायसामग्र्या घटज्ञानाद्यभावग्राहकसामग्र्या चा

[ दी ] सामग्रीविशेषणीयेत्यपि कश्चित् । तत्प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन यो भट्टमतसिद्धस्तदन्यो यावान् विशिष्टोऽविशिष्टो ज्ञानग्रह —तद्विषयो न येति निष्कृष्टमर्थं वक्ष्यति **स्वाश्रयेत्यादिना** ।

---

[ ग ] भट्टमतासिद्धया घटज्ञानप्रामाण्यग्रहेण मिश्रमते बाधोऽनेनापि विशेषणेन शक्यवारण । उक्तानुमित्यादिसामग्र्या दर्शितरीत्यैव वारणसम्भवात्, तद्वारणायाधिकविशेषणप्रवेशो व्यर्थ इत्यस्वरससूचनाय "कश्चिदि" ति । अत्र ज्ञानग्रहत्वेन ज्ञानग्राहकसामग्रीजन्यग्रहनिवेशासम्भवे तादृशसामग्रीजन्यग्रहत्वेन तन्निवेश शिरोवेष्टनेन नासिकास्पर्शनमनुधावतीति ज्ञानग्रहत्वेन ग्रह निवेश्य तद्विषयत्वकोटिकविप्रतिपत्त्यकथनेन मूलस्य न्यूनता, एव प्रथमविप्रतिपत्तावपि ज्ञानपदस्य स्वाश्रयार्थकत्वाय उक्तत्वात्तृतीयविप्रतिपत्तौ ग्राहकपदस्य ग्राहकसामग्रीपरत्वे तस्यास्ततो न भेद, न चाप्रामाण्यग्राहकत्वविशेषणाप्रवेशादयं विशेष, पक्षसङ्कोचेनैव अप्रामाण्यग्राहकसामग्रीग्राह्याश्रयकप्रामाण्ये बाधवारणसम्भवादेति मिश्रमत सम्यक्, तथा सति यादृशज्ञाने प्रामाण्यसंशयस्तत्प्रामाण्यस्य पक्षबहिर्भावेन तत्र मीमांसके स्वतस्त्वासाधनात्, प्रामाण्यसंशयानुपपत्तिरूपवक्ष्यमाणदूषणासङ्गते, एकस्यैव ज्ञानप्रामाण्यमिति पक्षवाचकपदस्य प्रथमविप्रतिपत्त्यनुरोधादप्रामाण्यग्राहकसामग्रीग्राह्याश्रयकपरत्वम्, तृतीयविप्रतिपत्त्यनुरोधेन च तदितरप्रामाण्यपरत्वमिति विरोधाच्च, एव ज्ञान गुण इत्यादिशाब्दबोधसामग्रीवारणाय प्रामाण्याग्राहकत्वेनेत्यादिस्वाप्रामाण्यग्राहकत्वस्य तृतीयविप्रतिपत्तावप्यवश्य विवक्षणीयतया दुर्वार एवोभयाविशेष, यश्च स्वाश्रये ज्ञानत्वप्रवेशाप्रवेशाभ्या मिश्राभिहितो विशेष· सोऽप्यसङ्गत, प्रयोजनसत्त्वे उभयत्रैव तत्प्रवेशावश्यकत्वात्तदसत्त्वे उभयत्रैव तदप्रवेशादित्यालोच्य तृतीयविप्रतिपत्तौ ग्राहकपदस्य गृह्णाति—विषयीकरोतीति व्युत्पत्त्या ग्रहपरत्व गृह्णन् इत्यस्य च विषयीक्रियत इत्यर्थपरत्वमभिसन्धाय तृतीयविप्रतिपत्तेरेक सामग्र्यघटितमा यपरत्वमाह ( तत्प्रामाण्येति )

[ टी ] यथा च तस्मादयमर्थो लभ्यते तथैवकारार्थविवेचने प्रपञ्चितमस्माभिः ।

---

[ ग ] विशिष्टोऽविशिष्टं वेत्यस्य विषयबाधग्रहाभावेनेत्यादिः । पूर्ववन्मतभेदेन विकल्पः ।

ननु तत्र यावत्पदाश्रवणात् कुतो ज्ञानग्रहे यावत्त्वलाभः; न चैवकारादेव तल्लाभः, एवकारस्य यावत्पदसमानार्थकत्वविरहात्; न च विशेषणसङ्गतैवकारस्य अयोगव्यवच्छेदार्थकतया शङ्खः पाण्डर एवेत्यादौ यथा यावच्छङ्खे पाण्डरत्वबोधः तथात्रापि यावद्ग्रहे प्रामाण्यग्राहकत्वबोधनिर्वाह इति वाच्यम्, शङ्खः पाण्डर एवेत्यादौ पाण्डरत्वस्य शङ्खविशेषणतया पाण्डरत्वे शङ्खनिष्ठाभावाप्रतियोगित्वरूपप्रामाण्यविशेषणप्राप्ततावोधकपदसमभिव्याहृतैवकारात् प्रकृते स्वाश्रयग्रहविषयतायामेव प्रामाण्यत्वव्यापकतालाभसम्भवेन विवक्षितस्य प्रामाण्यग्राहकत्वे स्वाश्रयग्रहत्वव्यापकत्वस्यालाभात्; सरोजेन नीलेन भूयत एवेत्यादौ क्रियासङ्गतैवकारेणात्यन्तायोगव्यवच्छेदस्यैव प्रत्यायनात्प्रकृतेऽप्येवकारस्य क्रियासङ्गततयाऽयोगव्यवच्छेदबोधकत्वासम्भवाच्चेत्याशङ्कां परिहरति ( यथा चेति ) ( एवकारार्थविवेचने प्रपञ्चितमस्माभिरिति) ज्ञानमर्थं गृह्णात्येवेतिवत् ज्ञानं रजतं गृह्णात्येवेत्यप्रयोगात् ग्रहणाविरूपार्थवाचकधातुसमभिव्याहृतेनाप्येवकारेणायोगव्यवच्छेद एव प्रत्याय्यते; ज्ञानमर्थं गृह्णात्येवेत्यादौ कर्तृप्रत्ययस्थले कर्तरि ज्ञाने यथा क्रियाकर्तृत्वायोगव्यवच्छेद प्रतीयते तथा ज्ञानेनार्थो गृह्यत एवेत्यादौ कर्मप्रत्ययस्थले विशेषणविशेष्यभाववैपरीत्येऽपि विशेषणीभूतेऽपि कर्तरि अविशेषणस्यापि क्रियाकर्तृत्वस्यायोगव्यवच्छेद प्रतीयते, न तु विशेष्यकर्मणि विशेषणीभूततत्तत्कर्तृकक्रियाकर्मत्वायोगव्यवच्छेदः, ज्ञानग्राह्यत्वायोगस्याप्रसिद्धेः; विशेषणे विशेष्यनिष्ठाभावप्रतियोगित्वव्यवच्छेदस्यायोगव्यवच्छेदरूपत्वेऽप्रसिद्धिविरहेऽपि उक्तस्थले तद्बोधस्वीकारे ज्ञानग्राह्यत्वे रजतत्वव्यापकताया अबाधेन ज्ञानेन रजतं गृह्यत एवेत्यादिप्रयोगापत्तेर्दुर्वारत्वात्; एतज्ज्ञानग्राह्यत्वेऽर्थत्वव्यापकताविरहेण एतज्ज्ञानेनार्थो गृह्यत एवेत्यादिप्रयोगा-

[दी] केचित्तु तत्र ग्राहकयावत्त्वेन विशेषणीयम्, एवकारश्च प्रामाण्यमात्रस्य तथात्वलाभायेत्याहुः । अन्ये तु—तत्प्रामाण्याग्राहकत्वेन यदुभयवादिसिद्धम्-तद्भिन्नत्वमग्राहकान्तार्थं ।

---

[प्र] नुपपत्तेश्च, एव च प्रकृतेऽपि प्रामाण्यग्राहकत्वे स्वाश्रयग्रहत्वव्यापकत्व प्रत्येतव्यमिति विवक्षितार्थलाभ , तद्बोधो यथाकथञ्चिदुपपादनीय इति भाव ।

अत्रापि विशेष्यतावच्छेदकावच्छेदेन विशेषणायोगव्यवच्छेद एवकारेण प्रत्याय्यत इत्यभिमानिना यावत्पदपूरणेन सिद्धसाधन वारयता मिश्राणा मतमुपन्यस्यति ( केचित्त्विति ) ( ग्राहकत्वेन विशेषणीयमिति ) नन्वेवमेवकारवैयर्थ्यमत आह (एवकारश्चेति) प्रामाण्यमात्रस्य तथात्वलाभाय-पक्षतावच्छेदकप्रमापदप्रवृत्तिनिमित्तत्वावच्छेदेन साध्यवत्त्वलाभाय । तत्सामानाधिकरण्यमात्रेण साध्यसाधने योगिज्ञानादिमात्रवृत्तिप्रामाण्यविशेषे अशक्तसिद्धसाधनापत्तिरिति भाव ।

अत्र च प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे साध्यस्य स्वत्वघटितत्वेनाननुगमेनाशक्तो बाध , उपदर्शितैवकारव्युत्पत्त्यैव ग्राहकस्य यावत्त्वलाभे यावत्पदपूरण चानुचितमित्यस्वरस ।

ज्ञान गुण इति शाब्दबोधादिना प्रामाण्याग्रहात् बाधस्य वारणाय, ओदनकामकर्तव्यताबोधविषय पाक इत्यादिशाब्दबोधे पदानुपस्थितस्यौदनसाधनत्वादिज्ञानस्य योग्यताभ्रमात् अन्वयितावच्छेदकतया भाने तादृशशाब्दबोधे तज्ज्ञानप्रामाण्याग्रहात् बाधस्य च वारणायाऽरुच्यितम्मतमन्येषामुपन्यस्यति (अन्ये त्विति) तत्प्रामाण्याग्राहकत्वेन—तत्प्रामाण्यग्रहाजनकत्वेन । उभयवादिसिद्धम्—नैय्यायिकमीमांसकोभयवादिसिद्धम् । अग्राहकान्तार्थं , सामग्र्या विशेषणमिति शेष । व्यवसायानुव्यवसायसामग्र्यो प्रामाण्याग्राहकत्वेन नैयायिकसिद्धतया तत्सङ्ग्रहायोभयसिद्धत्वनिवेश । गुरुमतसिद्धाया दर्शितकाम्यसाधनताज्ञानादिविषयकसामग्र्या प्रामाण्याग्राहकतया गुरुनैयायिकोभयसिद्धतया न तत्सङ्ग्रह ।

[दी] यदा ययोर्विवादस्तदा तात्पर्यवशात्तदुभयपरमुभयपदम्, अतो नाननुगमो दोषाय । नैयायिकासिद्धया ज्ञाततापटिततत्प्रत्यक्षजनकसामग्र्या प्रामाण्याग्रहात् ज्ञानग्राहकेति । न च ज्ञानं द्रव्यमित्यन्यथाख्यातिसामग्र्या प्रामाण्याग्रहादुक्तयावत्सामग्रीग्राह्यत्वाभावरूपपरतस्त्वसाधने सिद्धसाधनमिति वाच्यम्,—

---

[ग] न च शब्दाजन्यतादृशज्ञानोपस्थितेः नैय्यायिकमते शाब्दसामग्र्यप्रविष्टतया तद्घटितशाब्दसामग्री न नैयायिकसिद्धेति कथं तद्वारणमिति वाच्यम्,—तादृशोपस्थितिघटितकारणस्तोमस्य शाब्दसामग्रीत्वेन नैयायिकासिद्धत्वेऽपि प्रामाण्याग्राहकत्वेन तत्सिद्धत्वात् ।

ननु मीमांसकसामान्यं यः कश्चन वा निवेश्यते ? आद्ये व्यवसायानुव्यवसायसामग्र्योर्गुरुमिश्रमते सङ्ग्रहानुपपत्तिः, प्रथमायाः प्रामाण्याग्राहकतया मीमांसकसिद्धत्वावच्छिन्नभेदाभावात्; द्वितीये च सप्तमपदार्थरूपबाधाद्यभावघटितज्ञानानुमित्यादिविशेषसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतसिद्धभिन्नतया प्रामाण्यस्य तया अग्रहेण भट्टमते बाध इत्यत आह (यदा ययोरिति) अतः—तात्पर्यभेदात् । अननुगमः—अनुगतरूपेण मीमांसकानुपादानम् । न दोषायेत्यन्वयः । विवादभेदेन साध्यभेदस्वीकारे क्षतिविरहात् शब्दैक्यमात्रस्यानपेक्षितत्वात् सामग्रीपदार्थाननुगमेनार्थभेदस्य दुष्परिहरत्वादिति भावः । ज्ञानग्राहकत्वरूपविशेष्यांशसार्थक्योपपत्तये नैयायिकोपादानमिति दर्शयति ( नैयायिकेति ) ज्ञाततायाः भट्टमतसिद्धत्वेऽपि नैयायिकासिद्धतया उभयासिद्धत्वमाक्षिप्य कर्तुं नैयायिकासिद्धत्वाभिधानम् । तादृशज्ञाततापटितत्वेन तत्प्रत्यक्षसामग्र्या उभयवादसिद्धत्वलाभः ( प्रामाण्याग्रहादिति ) बाधवारणायेति शेषः । भट्टेन समं विवादे प्रामाण्याग्राहकत्वेन तन्मतमात्रासिद्धत्वनिवेशे बाधाप्रसक्त्या ज्ञानग्राहकत्वोपादानमनर्थकमापद्येतेति भावः । ( अन्यथाख्यातिसामग्र्येति ) गुरुमतासिद्धत्वेन उभयमतासिद्धाभिन्नयेति शेषः । सिद्धसाधनम्—अर्थान्तरम् । नैयायिकसिद्धतादृशान्यथाख्यातिसामग्र्याः प्रामाण्याग्राहकतयैव तन्मते उक्तपरत-

[ग] स्वरसत्त्वेन चरितार्थतया गुरुणा सम विवादे तस्या प्रामाण्याग्राहकत्वासिद्धिरिति यावत् । न तु सिद्धसाधन यथाश्रुतमेव, गुरुणा प्रामाण्याविषयकग्रहत्वेन तादृशपरतस्त्वाभ्युपगमासम्भवात् ।

अथैवमपि अनुव्यवसायसामग्र्या गुरुमतासिद्धया प्रामाण्याग्रहादर्थान्तरस्य वद्प्रमाणविशेषणेनापि वारणासम्भवादसङ्गतिः, यदि चानुव्यवसायस्य ज्ञानप्रत्यक्षत्वेन तत्सामग्र्या तत्प्रत्यक्षसामग्रीत्वेन गुरुमतसिद्धत्वमस्त्येवेति मन्यते तदा तादृशसामग्रीत्वेन तस्या प्रामाण्यग्राहकत्वमपि गुरोरनुमतमिति प्रामाण्याग्राहकत्वेन तन्मतासिद्धत्व दुरपह्नवमेव, यदि च मनस्सयुक्तसमवायादिसमुदायत्वेन प्रामाण्याग्राहकत्व तस्या गुरुणा स्वीक्रियत इति न तादृशानुव्यवसायसामग्र्या प्रामाण्याग्राहकत्वेन गुरुमतासिद्धत्वमित्युच्यते तदा उक्तान्यथाख्यातिसामग्र्या दोषादिरूपया ज्ञानसामग्रीत्वादिना गुरुमतासिद्धत्वेऽपि दोषादिघटितसमुदायत्वादिना प्रामाण्याग्राहकत्व तस्या गुरुमतासिद्धमेवेति कथमियमाशङ्का ? यदि च व्यवसायसामग्र्या अपि प्रामाण्याविषयकज्ञानजनकसामग्रीत्वादिना प्रामाण्याग्राहकत्वस्य गुर्वादिमतसिद्धतया तज्ज्ञानव्यक्त्युत्पादकसामग्रीत्वेन प्रामाण्याग्राहकत्वाभ्युपगमविषयभिन्नत्वमवश्य निवेक्षणीयमिति शङ्कासङ्गतिः, अन्यथाख्यातिजनकसामग्र्या दोषादिघटितायास्तेन रूपेण गुरुणानभ्युपगमेन तद्वारणासम्भवात्, नैयायिकसिद्धधर्मिज्ञानतदनन्तरजातनोध्यस्मरणरूपज्ञानद्वयोपरान्यथाख्यातिस्थले तादृशज्ञानद्वयस्यैव गुरुणा भ्रमत्वस्वीकारात्, एकतरव्यक्तिसामग्रीत्वस्य न्यायमतसिद्धान्यथाख्यातिकारणकलापे असत्त्वात् तादृशकारणकलापस्य न्यायमते गुरोस्तादृशाभ्युपगमविषयत्वाभावादित्युच्यते तदानुव्यवसायसामग्र्या अपि व्यवसायरूपतया स्वीकृतज्ञानग्रहव्यक्तिसामग्रीत्वेन प्रामाण्याग्राहकरूपाया एव गुरुणाङ्गीकारात् तद्ग्राह्यतयार्थान्तरेण व्यवसायसामग्र्या प्रामाण्याग्राहकत्वासिद्धिर्दुर्वारैवेति ।

[ दी ] व्यधिकरणप्रकारकाजनकत्वेन सामग्रीविशेषणात् । पूर्वोक्तदिशात्रापि निष्कर्षो बोध्य इत्याहुः । इति प्रथमा विप्रतिपत्तिः ।

---

[ ग ] नैवम्–अनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वसिद्धावपि ज्ञानस्य स्वप्रकाशतानिराकर्तॄणां नैय्यायिकानां प्राथमिकज्ञानग्राह्यत्वरूपस्वतस्त्वस्य प्रामाण्ये निराकरणेन उद्देश्यासिद्धेः । अन्यथा व्यवसायसामग्र्या न्यायमते ज्ञानग्राहकत्वरूपविशेषणानाक्रान्ततया तस्यास्साध्यघटकत्वेन तदग्राहकतायाः कथञ्चिदपि निराकरणायोगेन समीहितासिद्धेर्वज्रलेपायितत्वात् । ( व्यधिकरणप्रकारकाजनकत्वेनेति ) व्यधिकरणप्रकारकमिच्छादिकं प्रसिद्धमेव तन्मते ।

न चैवं ज्ञानमिच्छामीति विशिष्टज्ञानसामग्र्या गुरुमतासिद्धतया तदग्राहकतामादाय परतस्त्वसाधने सिद्धसाधनं दुर्वारमिति वाच्यम्, तस्यापि दोषस्यैतन्मतेऽस्वरसबीजत्वात् ( अत्रापि निष्कर्ष इति ) सामग्रीनिवेशस्यानतिप्रयोजनत्वात् प्रामाण्याविषयत्वेन मतद्वयसिद्धभिन्नव्यधिकरणधर्मप्रकारकान्यसकलज्ञानग्रहविषयत्वरूपानेकृष्टसाध्योपादानमित्यर्थः । अत्र कल्पे ज्ञानजन्या ज्ञाततेति प्रत्यक्षसामग्र्यग्राह्यतया भट्टमते बाधः । मतत्रये एकरूपेण साध्यत्वानिर्वाहः।

न च मतान्तरसामग्र्यननुगमानुयोगस्तुल्यः, फलोत्पत्तिप्रयोजकतावच्छेदकावच्छिन्नत्वेन तदनुगमात् ।

न च प्रत्येकं मीमांसकेन विवादेऽन्यमतासङ्ग्रहो न दोषाय, त्रिभिरेकदा विवादे मीमांसकत्रयस्यैवोपादाने साधारण्यसम्भव इति वाच्यम्;–त्रिभिरेकदा विवादे मीमांसकत्वेन त्रयोपादाने गुर्वादिमते प्रामाण्यग्राहकतया मिश्रादिमतासिद्धव्यवसायादिसामग्र्यसङ्ग्रहस्योक्तस्य दुर्वारत्वात् । मीमांसकत्रयत्वेन निवेशे सप्तमपदार्थरूपाभावघटितज्ञानग्राहकसामग्रीविशेषाणां तत्तद्ग्रहजनकत्वेन गुरुमतसिद्धप्रामाण्याग्राहकताकत्वेन पूर्वोक्तदोषवारणेऽपि

[ दी ] तज्ज्ञानविषयकज्ञानप्रागभावाप्रयुक्तप्रागभावप्रतियोग्यर्थकमजन्यान्तम् । कारणाभावप्रयुक्तश्च कार्याभाव इत्यपि केचित् । तच्चिन्त्यम् ।

---

(ग) विशेषणाङ्गे भ्रमत्वापत्ते, तथापि तादृशज्ञानप्रकारत्वमात्र सा ध्यतिति विशेषान्तरानुसरणेन अप्रसिद्धिरिति । तज्ज्ञाने ग्राह्यत्वस्य साध्यत्व निषेधसाधने बाधा बोध्य । मिश्रमतमाह (तज्ज्ञानेति) जन्यपदस्य तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोग्यर्थकतया अजन्यपदेन यद्यपि तत्प्रागभावप्रयुक्तप्रागभावाप्रतियोगित्व बोध्यते, तथापि तावता ईश्वरज्ञानव्यावृत्त्यसम्भवात्तथाऽन्तरा प्रवेशित । एव च परमेश्वरज्ञानस्य प्रागभावप्रतियोगिता विरहेण तज्ज्ञानविषयकज्ञानप्रागभावाप्रयुक्तप्रागभावप्रतियोगित्वविरहात् चरमज्ञानपदेन तदुपादानसम्भवात् न वा मध्यमज्ञानपदेनेति पूर्वोक्तदोषोद्धार । ईश्वरज्ञानस्य प्रामाण्यानुमितेश्चेतराभावाप्रयुक्तात्यन्तान्योन्याभावप्रतियोगित्वादभावसामान्यप्रतियोगित्वमुपेक्ष्य प्रागभावप्रतियोगित्व निवेशितम् । प्रथम भावपद सम्पातायातम्, नियतसम्बन्धेन जन्यमात्रहेतोरीश्वरज्ञानस्य तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या अन्यसम्बन्धावच्छिन्नाभावस्य प्रसिद्धावपि कार्याभावाप्रयोजकतया तज्ज्ञानविषयकज्ञानस्याभावसामान्यानवेशेऽपि क्षतिविरहात् । प्रामाण्याश्रयज्ञानविषयकपरामर्शादिजन्यप्रामाण्यानुमित्यादिप्रागभाव परामर्शादिप्रागभावप्रयुक्तत्वेन व्यावर्तयितु शक्यते न तु तदीयाभावान्तरप्रयुक्तत्वेन, ध्वसप्रागभावयोरत्यन्ताभावविरोधितया तद्विरहे परामर्शादेरत्यन्ताभावासत्त्वात् । कारणध्वसस्य कार्याभावाप्रयोजकत्वादिति सूचनार्थं वा तत् । तत्प्रयुक्तत्व च तदधीनसत्त्वकत्वम् । अधीनत्व च स्वरूपसम्बन्धविशेष । कारणस्य प्रागभावरूपत्वव्यतिरेके स्वप्रागभावाविरोधिकार्ये नोत्पन्न इति कार्यप्रागभावसत्त्व कारणप्रागभावाधीनमिति तस्य तत्प्रयुक्तत्वमित्याह (कारणेति)

केचित्तु तदुक्तस्वरूपसम्बन्धविशेषे तद्व्यतिरेकोत्तर नियमतोऽसत्त्व तत्प्रयुक्तत्वम्, प्रामाण्यानुमितिप्रागभावश्च तज्जनकपरामर्शप्रागभावव्यतिरेकोत्तरमिति राष्ट्रीयाति न्ति, तादृशप्रागभावव्यतिरेकरूपस्य परामर्शस्य चो-

[ग] तस्मिन्परामर्शाद्द्वितीयक्षणादौ नियमतो न तिष्ठति, परामर्शादिद्वितीय-क्षणे तृतीयक्षणे वानुमितेस्तत्त्वेनोरिति तदप्रयुक्त एव । प्रथमदलप्रवेशात् सद्व्यवस्यानुव्यवसायादिप्रागभावस्य तज्ज्ञानविषयकत्वात्मकज्ञानतादृशस्वो-त्तरज्ञानान्तरप्रागभावनाशोत्तर नियमेनासत्त्वेऽपि न तादृशप्रागभावाप्रयुक्त-त्वम् । चरमदलप्रवेशात्तदनुव्यवसायादिपूर्वं किञ्चित्कालानन्तरव्यवसायविषय कानुमित्यादिप्रागभावोत्तरकाले मतोऽप्यनुव्यवसायादिप्रागभावस्य न तादृ-शानुमित्यादिप्रागभावप्रयुक्तत्वम्, तादृशानुमित्यादिप्रागभावनाशोत्तरमपि तादृशानुव्यवसायादिप्रागभावसत्त्वेन तद्व्यतिरेकस्य तादृशातीतानुमित्या-दिप्रागभावव्यतिरेकोत्तरकाले नियतासत्त्वाभावात् । यादृशानुव्यवसायादे-रव्यवहितपूर्वकाले तद्गत पुंसोऽन्यस्य वा कस्यचिद्व्यवसायविषयकमनु-मित्यादिरूप योगजप्रत्यक्षरूप वा ज्ञान जात तत्प्रागभावस्य तत्प्रा-गभावप्रयुक्तत्वेऽपि न क्षति, सर्वस्यैवानुव्यवसायस्य अव्यवहितपूर्वं व्यवसायविषयकतादृशज्ञानोत्पत्तौ मानाभावेन तादृशानुव्यवसायमात्रस्यैव प्रामाण्ये माध्यसत्त्वस्य परैरुपपादनीयत्वात् । अत्र चाभावस्य गुरुमतेऽधि-करणरूपतया ज्ञानप्रागभावस्य चरमरूपस्य व्यतिरेककालाप्रसिद्ध्या गुरु-मते ज्ञानप्रागभावप्रयुक्तत्वाप्रसिद्धिरिन्त ध्येयमवेत्याहु ।

स्वरूपसम्बन्धरूपाधीनत्वघटितप्रयुक्तत्वनिवेशेऽपि व्यवसायजनका-त्मनोयोगप्रागभावस्य आत्मनिष्ठस्य तन्निष्ठतद्विषयकज्ञानप्रागभावात्मकतदा-त्मस्वरूपतया तत्प्रयुक्तगुरुमतमद्द्व्यवसायप्रागभावस्य तज्ज्ञानविषयक-ज्ञानप्रागभावाप्रयुक्तत्वं तन्मते दुर्घटमिति चिन्तनीयम् ।

तज्ज्ञानविषयकज्ञानप्रागभावत्वेन प्रयोज्यतानिवेशे स्वरूपसम्बन्ध-रूपाधीनत्वस्याप्रामाणिकत्वा तद्बीजम् । मतान्तरे तज्ज्ञानविषयकत्वतज्ज्ञान-व्यक्तिप्रागभावत्वविशिष्टाधिकरणकालोत्तर यद्धर्मविशिष्टस्य सत्त्व तादृश-प्रागभावत्वविशिष्टानधिकरणकालोत्तर च नियमेनासत्त्व तद्धर्ममित्रप्राग-भावत्वरूपानुयोगितानिरूपकत्वस्य अजन्यान्तार्थत्वे आत्मस्वरूपप्रागभा-वानधिकरणकालाप्रसिद्धेरुदासम्भवेऽपि पूर्वोक्तप्रसिद्ध्यादिवशेन यत्र परा-

[दी] ननु यथार्थघटेच्छासस्कारतत्त्वादिहेतुकया पक्षधर्मतानलाद्धटप्रमात्वविशिष्टापूर्वव्यक्तिग्राहिण्या अनुमित्या ग्राह्यत्वात्सिद्धसाधनम्,

[ग] मर्शादितृतीयक्षण एव प्रमाण्यानुमित्यादिकमुत्पत्त्र तत्परामर्शादिप्रागभावत्वविशिष्टानधिकरणतत्परामर्शाद्युत्पादक्षणोत्तरमपि तदनुमित्यादिप्रागभावत्वविशिष्टसत्त्वेन तादृशानुमितिनिरूपितप्रागभावत्वस्य निरुक्तधर्मभिन्नत्वेन तादृशानुमितिग्राह्यतया सिद्धसाधनमित्यादिक चिन्तानीजमवसेयम् (यथार्थघटेच्छेति) याथार्थ्यं घटे घटत्वप्रकारकत्वम्, तच्च संस्कारादावप्यन्वेति । तद्धेतुका घटत्वप्रकारकप्रमानुमितिश्च समवायेन तादृशप्रमासाध्यका आत्मपक्षका, जन्यतासम्बन्धेन तत्साध्यका तज्जन्यत्वसाध्यका वा तादृशेच्छादिपक्षिका च, आत्मनि पक्षे समवायेन हेतुता, अन्त्ये च तादात्म्येनेति बोध्यम् । घटप्रमात्व घटे घटत्वप्रकारकत्वम्, तद्विशिष्टा या अपूर्वा-तदनुमितिजनकपरामर्शाविषयो व्यक्ति तद्ग्राहिण्या । मीमासकमते सामान्यस्याप्रत्यासत्तितया विशेषणज्ञानस्य विशिष्टबुद्धावहेतुत्वेन प्रमात्वेन व्यक्त्यन्तरविषयकपरामर्शादपि अज्ञातव्यक्तिप्रकारकानुमितेम्सम्भवादिति भाव । सिद्धसाधनम्-अर्थान्तरम् । मीमासकमते तादृशानुमितिग्राह्यतयैव विधिप्रसिद्धेश्चरितार्थतयोद्देश्यप्रत्यक्षादिविशेषग्राह्यत्वासिद्धिरिति यावत् । न तु यथाश्रुत सिद्धसाधनम्, विशेषणधीहेतुतावादिभिर्नैय्यायिकैः पूर्वागृहीतव्यक्तिप्रकारकानुमित्यनुपगमेन तन्मतेऽनुमितिमादायोक्तसाध्यसत्त्वानिर्वाहात् ।

अथ ज्ञानपद यदि तज्ज्ञानव्यक्तिपरमुच्यते, तदाऽपूर्वव्यक्तिविषयकज्ञानाजन्ययोक्तानुमित्या तद्व्यक्तौ प्राग्नामादायार्थान्तरप्रसक्ति, तज्ज्ञानपदस्य घटत्ववत्तीत्यादिप्रामाण्याश्रयपरत्वे घटत्वादिप्रकारकत्वाश्रयपरत्वेवा नाय दोष, उक्तस्थले परामर्शेन प्रमात्वपुरस्कारेण तदाश्रयव्यक्त्यन्तरावगाहनाचादृशानुमितेम्सम्भवेऽपि तदाश्रयविषयकज्ञानाजन्यत्वानिर्वाहात् ।

न चैवमपि यत्र घटत्वादिमात्रप्रकारकमेव ज्ञान घटत्ववतीत्यादि-

[दी] अथ तज्ज्ञानपदेन तस्य–प्रामाण्यस्य तद्घटकस्य तत्प्रकारकत्वादेर्वा आश्रयमात्रस्याभिधानाददोषः, इति चेन्न—भट्टमतापरिग्रहप्रसङ्गात् ।

---

[ग] प्रामाण्यप्रकारेण परामर्शेनावगाढम्, तत्रत्यानुमितिर्नैवमपि वारयितुं शक्यत इति मिश्रभट्टमते तद्ग्राह्यतामादायैव पर्यवसानं कथं न स्यादिति वाच्यम्, व्यधिकरणप्रकारकाजन्यत्वविशेषणेन तादृशानुमितेरपि वारणसम्भवात्, एवं ज्ञानत्वेन घटादिज्ञानविषयकपरामर्शाच्चैत्र घटत्ववति घटत्वप्रकारकत्वे लाघवमिति लाघवज्ञानात्तेन रूपेण घटज्ञानानुमितिः सापि कथञ्चिद्वारणीयेत्याशङ्कते (अथेति) लाघवमनुसृत्याह (तद्घटकेति) आदिना तद्वद्विशेष्यकत्वस्य विकल्पेन परिग्रहः । ज्ञानत्वनिवेशेऽपि प्रयोजनविरहात्तन्निवेशव्यवच्छेदाय मात्रपदम् । सामान्यपरं वा । तेन यत्किञ्चिदुपाश्रयविषयकज्ञानजन्यतया तादृशज्ञानसामान्याभाववत्त्वविरहात् उक्तानुमितिव्यावर्तनं स्पष्टीकृतम् । उत्तरज्ञाने चैत्रादिनिष्ठत्वेन विशेष्ये, न तु प्रामाण्याश्रयसमानाधिकरणत्वेन, ईश्वरज्ञानस्यापि प्रामाण्याश्रयतया तस्यापि च तत्समानाधिकरणतया तद्व्यावृत्त्यनुपपत्तेः । (भट्टमतापरिग्रहेति) तन्मते प्रमात्वमपुरस्कृत्य ज्ञानत्वेन व्यापकत्वज्ञानात् प्रमात्वेनानुमितेर्मिश्रमतखण्डनावसरे निराकृतत्वात् प्रमात्वावच्छिन्नव्यापकताज्ञानस्य च प्रकृतप्रामाण्याश्रयविषयकत्वनियमाद्भट्टमते तद्बाधाया ज्ञाततालिङ्गकानुमितेरुक्तरूपानाक्रान्तत्वादिति भावः ॥

अथैतद्द्वितीयप्राथमिकघटादिज्ञानात्पूर्वं तदीयप्रामाण्यस्यानुपस्थित्या तेन रूपेण व्यापकताज्ञानासम्भवात् ज्ञाततालिङ्गकानुमित्या तदीयप्रामाण्यं न गृहीतुं शक्यत इति घटत्वादिकमादाय या यद्धर्मवन्निष्ठा यत्प्रकारिका ज्ञातता ।।। तद्वति तत्प्रकारकज्ञानजन्येत्यादिसामान्यव्याप्तिग्रहात् पक्षधर्मताबलेन घटत्वादिघटितप्रामाण्यविशिष्टज्ञानानुमितिं भट्टैरङ्गीकार्या, सा च घटत्वादिप्रकारकज्ञानज्ञानमन्तरेणापि भवन्ती न घटत्वादिप्रकारकत्वघटितप्रामाण्याश्रयविषयकज्ञानजन्येति न भट्टमतापरिग्रहः ।

[दी] यत्तद्भ्यां सामान्यतो व्याप्त्या प्रामाण्यविशेषलाभस्तु प्रकृतेऽपि दुर्वारः। यत्र एतादृशानुमानात्तत्तारतम्य पक्षताहिर्भावे तु सर्वज्ञ एव तद्वत्तारतम्याजन प्रामाण्य प्रष्टव्या ।

---

[ग] न च यत्तदर्थाननुगमात् घटत्ववतीत्यादिप्रामाण्यप्रकारकानुमित्यौपयिकयत्त्वादीतरतत्तद्धर्मघटितप्रामाण्यावच्छिन्ननिरूपितव्याप्तीनामानन्त्यादसर्वज्ञदुर्ज्ञेयतया प्रामाण्यप्रकारकानुमितेर्न सम्भवति, यत्किञ्चिदेकधर्मघटितसाध्यसाधनव्याप्तिज्ञानादेव प्रकृतधर्मघटितहेतौ पक्षधर्मताज्ञानात्तद्घटितसाध्यसिद्ध्युपगमे प्रकृतधर्मघटितहेतौ तदघटितसाध्यस्य व्यभिचारज्ञानदशायामपि यत्तच्छब्दार्थान्तरघटितकिञ्चित्साध्यसाधनव्याप्तिज्ञानात्प्रकृतानुमित्यापत्तिः, यद्यद्धर्मघटितसाध्यसाधनोभय यदोपस्थित तदानीन्तनानुमितौ तत्साध्यसाधनोभयव्याप्तेर्ज्ञानस्य हेतुतास्वीकारे तदानीमसिद्धसाध्यस्यैव तदीयव्याप्तिज्ञाननिरपेक्षानुमितिस्वीकारेऽपि च नोक्तातिप्रसङ्गवारणसम्भवः, तत्साध्यमसिद्धिस्थलीयानुमितिसामग्र्या तत्साध्यस्य तद्धेतौ व्यभिचारज्ञानदशायामपि सत्त्वात् तत्कालस्यापि तत्र हेतुतया अतिप्रसङ्गवारणे व्याप्तिज्ञानहेतुतावैयर्थ्यादिति वाच्यम् —तत्तद्धर्मघटितसाध्यसाधनोभयव्याप्तिज्ञानविरहविशिष्टतत्तद्धर्मघटितसाध्यसाधनोभयोपस्थिते प्रतिबन्धकता यत्किञ्चिदेकधर्मघटितसाध्यसाधनोभयव्याप्तिज्ञानस्य च हेतुता स्वीकृत्यातिप्रसङ्गस्य वारणीयत्वात्, तत्तद्धर्मघटितहेतौ पक्षधर्मताज्ञानमेव पक्षे तत्तद्धर्मघटितसाध्यसिद्धौ नियामकं सामर्थ्यम्। सामान्यमुखीयव्याप्तिप्रयोज्यानुमितिप्रयोजिका तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानानपेक्षायामपि न क्षतिः, विलक्षणायास्सामग्र्यास्तत्रोपादेयत्वादित्यभिप्रायिकामाशङ्कां निराकरोति (यत्तद्भ्यामिति) प्रकृतेऽपि—इच्छालिङ्गकप्रमानुमितिस्थलेऽपि। या यद्धर्मवद्विशेष्यिका यद्धर्मप्रकारिकेच्छा सा तद्वद्विशेष्यकतत्प्रकारकज्ञानसाध्येत्याकारकपटादिज्ञानविषयकव्याप्तिज्ञानात्पक्षधर्मताज्ञानात् घटादिप्रमात्वविशिष्टलाभो दुर्वार एवेत्यर्थः। तथा च प्रकृतप्रामाण्याश्रयविषयकज्ञानाजन्यत्वनियमेऽपि तादृशानुमितिसाधनतया सिद्धसाधन दुर्वारमिति भावः। ननु सर्वेषां तादृशानुमानानियमेन यादृशप्रामाण्यं स्वाश्रयविषयकज्ञानाजन्यानुमितेन विषय तदेव पक्षीकृत्य न तत्र सिद्धसाधनावकाश इत्यत आह (सर्वज्ञा एवेति) तद्वत्तारतम्यजनम् स्वाश्रयवक्ष्यमाणजन्यसामान्यव्याप्तिघटितानुमितिविषय साक्षम् (प्रामाण्य प्रष्टव्या इति)

[दी] अत्राहुः—तादृशज्ञानजन्यत्वेन यन्नैयायिकासिद्धं तद्भिन्नमजन्यात्वेन विवक्षितम् । नैयायिकनये ज्ञाततायाः शशविषाणकल्पत्वात्तल्लक्षणोदिकमपि ज्ञानमसत्कल्पमेव ।

---

[ग] तथा च कालस्यानवधिकतया आत्मनां चानन्त्येन सर्वत्रैव प्रामाण्ये किञ्चित्पुरुषीयकिञ्चित्कालीनतादृशानुमितिविषयत्वसम्भावनया विशिष्य पक्षस्यैव दुष्प्रतिपत्तिकतया विचारासम्भव इति भावः (तादृशज्ञानजन्यत्वेनेति) प्रकृतप्रामाण्याश्रयविषयकचैत्रादिज्ञानजन्यत्वेनेत्यर्थः । (तद्भिन्नमजन्यात्वेन विवक्षितमिति) तथा च विशिष्टबुद्धौ विशेषणज्ञानहेतुतावादिनां नैयायिकानामज्ञातप्रमाया अनुमितावपि प्रकारतया उक्तप्रमासाध्यकानुमितित्वात्तत्प्रमारूपविशेषणज्ञानजन्यतया नैयायिकसिद्धैवेति न तद्ग्राह्यतया कथितसिद्धसाधनावकाश इति भावः । भट्टोद्देश्यप्रामाण्यग्राहकलाकसिद्धविषयानुमितेरुक्तरूपेण नैयायिकसिद्धं यत्तदन्यत्वमुपपादयति (नैयायिकनय इति) असत्कल्पमिति )

यद्यपि व्यवसायानन्तरं द्वित्रचतुरादिक्षणाभ्यन्तरजातं ज्ञानं भट्टैर्ज्ञातताहेतुकानुमितित्वेन स्वीकृतमपि साक्षात्कारित्वेनैव नैयायिकसिद्धम्, तथाप्यात्माभिन्नविशेष्यकज्ञानग्रह एव तथा, न तु ज्ञातताविशेष्यको ज्ञानजन्यत्वग्रहो विषयविशेष्यको ज्ञानविषयत्वग्रहो वा, तादृशानुमितिमात्रमादायैव भट्टमते पक्षे साध्यवत्त्वमुपपादनीयम् ।

न च ज्ञातताविशेष्यकानुमितित्वेन भट्टाभ्युपगतस्यापि प्राथमिकज्ञानग्रहस्य नैयायिकैरात्मविशेष्यकज्ञानग्रहत्वेन स्वीकारात्तस्य नैयायिकासिद्धत्वमिति वाच्यम्, एवमपि व्यवसायरूपविशेषणज्ञानजन्यत्वेन तस्य नैयायिकासिद्धत्वात्प्राथमिकज्ञानग्रहस्य नैयायिकैर्ज्ञानविशेष्यकत्वेनैव स्वीकरणीयत्वात् पूर्वं विशेषणज्ञानाभावेन जन्मते तस्य विशेषणत्वासम्भवात्तादृशज्ञानस्यैव भट्टैरनुमितित्वस्य ज्ञातताज्ञानोत्तरत्वस्य च स्वीकारात्तद्ग्राह्यताभावाच्च भट्टानां साध्यवत्त्वोपपत्तेः । एवं चासत्कल्पमित्यस्य तज्ज्ञानविषयकज्ञानजन्यत्वाभ्युपगमवीजानुमितित्वाभ्युपगमादिपर

[दी] व्यवसायानन्तरोत्पन्नमेव च ज्ञानं मिश्राणां प्रामाण्यग्राहकम् । ज्ञानत्वादिविशिष्टविषयकं वक्तव्यमित्यपि कश्चित् ।

---

[ग] एवेत्यर्थः । ज्ञानविशेषणकानुव्यवसायस्य व्यवसायविषयकज्ञानजन्यतया नैय्यायिकसिद्धतया तमादाय न मिश्रमते साध्यवत्त्वनिर्वाह इत्याशङ्का परिहरति (व्यवसायानन्तरोत्पन्नमेव चेति) (मिश्राणां प्रामाण्यग्राहकमिति) तथा च विशेषणधीहेतुत्वमनङ्गीकुर्वाणेन मुरारिमिश्रेण प्राथमिकज्ञानजानं तद्विशेषणकत्वेन स्वीकृतमपि नैयायिकैर्ज्ञानविशेष्यकतयैव स्वीक्रियते, अतस्तज्ज्ञानविषयकज्ञानजन्यत्वेन नैयायिकासिद्धतद्ग्राह्यत्वमादाय मिश्राणां पक्षे साध्यवत्त्वोपपत्तिरिति भाव । नैयायिकैर्ज्ञानप्रकारकतया स्वीकृतमप्यनुव्यवसाय प्रकारान्तरेण सङ्गृह्णतः कस्यचिन्मतमाह (ज्ञानत्वादीति) एतच्च स्वरूपकथनम् । किञ्चिद्विशिष्टविषयकत्वमेव विवक्षितम् । वक्तव्यम्–ज्ञानविषयेरयनेन निरूपणीयम् । तथा च जानामीत्याकारकोऽनुव्यवसायो व्यवसायरूपविशेषणज्ञानजन्यत्वेन न्यायमतसिद्धोऽपि न ज्ञानत्वादिविशिष्टविषयकज्ञानजन्यत्वेन तन्मतसिद्ध', निर्विकल्पकरूपविशेषणज्ञानं विषयकज्ञानादेव विशेष्ये विशेषणमित्यादिरीत्या तदुत्पादस्य तैरुपगमादिति तत्त्वम् ।

कश्चिदित्यस्वरससूचनम् । तद्बीजन्तु– प्राथमिकज्ञानग्रहस्यापि न्यायमते उपस्थितविषयविशिष्टज्ञानविषयकत्वे बाधकाभावाघट्टे निर्विकल्पकत्वासम्भव, ज्ञानत्वविशिष्टविषयकत्वविरहेण प्राथमिकज्ञानग्रहस्य ज्ञानत्वांशे निर्विकल्पकतया जानामीत्याकारकतज्जन्यानुव्यवसायग्रहेऽपि स्वतस्त्वविवादविषयप्रामाण्यग्रहस्य पक्षत्वे तस्य ज्ञानत्वविशिष्टविषयकज्ञानजन्यता घटत्ववति घटत्वप्रकारकज्ञानमित्ये तादृशानुभवत्यादिबुद्धया ग्रहासिद्धबाधन दुर्वारम्, एवमुक्तरीत्यैव निर्वाहेऽधिकविन्याप्यानिरिक्तरीत्यादिकम् ।

तज्ज्ञानपदस्य तद्व्यक्तिपरत्वे सामान्यलक्षणाजन्यप्रमात्वविशिष्टानुव्यक्तिविषयकज्ञानप्रसिद्धतया सिद्धसाधनस्य दर्शनीयतया तस्य

[दी] तज्ज्ञानार्थस्तु पूर्वोक्तो ग्राह्यः । तेन प्रमात्वरूपसामान्यलक्षणयाऽपूर्वव्यक्तौ प्रमात्वग्रहेऽपि न क्षतिः । तादृशज्ञानग्राह्यत्वं तु तस्मिन् ज्ञाने तादृशज्ञानग्राह्यत्वम् ।

---

[प्र] प्रकृतप्रामाण्याश्रयपरत्वं तद्घटकघटत्वादिप्रकारकत्वाद्याश्रयपरत्वं चेत्याह (तज्ज्ञानार्थस्त्विति·) न क्षतिः—न सिद्धसाधनम् ।

अथैवमपि तज्ज्ञानविषयकज्ञानाजन्ये प्रथमानुव्यवसाये प्रामाण्यघटकप्रकारितादुपनायकज्ञानवशात्प्रामाण्यस्य भानसम्भवात्तद्ग्राह्यतामादाय सिद्धसाधनं दुर्वारमेव ;

न च घटत्वादिप्रकारितायाः प्राथमिकज्ञानं लौकिकप्रत्यक्षरूपं तदाश्रयघटितसन्निकर्षाधीनमिति नियमतस्तदाश्रयविषयकमेव, तथा च प्रयोज्यत्वरूपजन्यत्वविवक्षया तदाश्रयविषयकज्ञानप्रयोज्यतदुपनीतिभानमादाय न सिद्धसाधनावसर इति वाच्यम् ,—घटत्वादिप्रकारितायास्तदाश्रयाविषयकस्यापि प्रकारितात्वादिसामान्यलक्षणया प्राथमिकप्रत्यक्षस्य सम्भवात्तन्मूलकोपनीतभानग्राह्यतया सिद्धसाधनस्य दुर्वारत्वात् ;

न च ज्ञाननिष्ठं प्रकारित्वादिकं हि ज्ञानस्वरूपमेव, तथा च तज्ज्ञानमेव तदाश्रयज्ञानमिति न तज्जन्यतदुपनीतभानग्राह्यतया सिद्धसाधनमिति वाच्यम्,—एवं सति यज्ज्ञानांशे ग्राह्यत्व यदीयप्रामाण्ये वा ग्राह्यत्वं तज्ज्ञानव्यक्तेः तज्ज्ञानार्थत्वेऽपि नोक्तसामान्यलक्षणाजन्यज्ञानग्राह्यत्वेन सिद्धसाधनमिति तज्ज्ञानार्थस्त्वित्यादिविरोधापत्तिरिति चेन्न; यत्र पूर्वं यद्गृहीतं तत्रैव तस्योपनीतभानमिति प्राचीननियमानुसारेणेयं विप्रतिपत्तिरिति दर्शितोपनीतभानमादाय सिद्धसाधनस्यानवकाशात् । तादृशनियमानभ्युपगमे तु तज्ज्ञानविषयकज्ञानस्थले प्रकृतप्रामाण्यघटकप्रकारिताविषयकज्ञानं निवेश्य सामान्यलक्षणाजन्योक्तप्रत्यक्षमुपनीतभानात्मकप्रत्यक्षमादाय सिद्धसाधनस्य वारणीयत्वात् ।
ग्राह्यत्वस्य विषयताघटकत्वे दोषस्य तदन्यतया तन्निर्वक्ति (तादृशेति)
तस्मिन् ज्ञाने तादृशज्ञानग्राह्यत्वम्-तज्ज्ञानविशेष्यतानिरूपिततज्ज्ञानविषयकज्ञानाजन्यज्ञानीयप्रकारत्वम् । ज्ञानाजन्येत्यस्योक्तोऽर्थः । प्रामाण्यस्य

[टी] तादृशज्ञानप्रकारस्य वा । तेन घटभिन्नत्वादिना प्रामाण्यग्रहेऽपि न दोषः, न वा निषेध्याप्रसिद्धिः, तस्मिन्नेव ज्ञाने सुलभत्वात् ।

---

[ग] तत्तज्ज्ञाननिष्ठप्रकारितारूपस्य तत्तज्ज्ञानव्यक्तिस्वरूपतामते प्रामाण्याश्रयतत्तज्ज्ञानं तत्तद्व्यक्तित्वेनैवोपादेयम्, प्रमात्वसामान्यलक्षणाजन्यज्ञानमादाय सिद्धसाधनावकाशादित्याशयेन तस्मिन् ज्ञान इत्युक्तम् । तदंशमनुपादाय तादृशज्ञानप्रकारतामात्रनिवेशे घटत्ववति घटत्वप्रकारकत्वत्वादिना पक्षतायां तज्ज्ञानव्यक्तिभिन्नघटत्वादिप्रकारकज्ञाननिष्ठतादृशज्ञानप्रामाण्ये तज्ज्ञानविषयकज्ञानाजन्यज्ञानान्तरपक्षकानुमित्यादिप्रमकतया सिद्धसाधनप्रसङ्गात्, प्राचीनैः पक्षतावच्छेदकैक्येऽपि अंशतःसिद्धसाधनस्य दोषताभ्युपगमात्, तददोषत्वेऽपि अन्ततो बाधेन नैयायिकानामुद्देश्यस्य घटत्ववति घटत्वप्रकारकत्वत्वावच्छेदेन स्वतस्त्वाभावसिद्धेरनिर्वाहात् ।

यदि च प्रकारिता ज्ञानस्वरूपातिरिक्ता, तदा प्रमात्वसामान्यलक्षणजन्यातीतादिप्रकारव्यक्तिप्रत्यक्षमादाय सिद्धसाधनवारणाय तज्ज्ञानपदस्य प्रमात्वाद्याश्रयपरत्वे नोक्तदोषावकाश इत्याशयेन तस्मिन्नेव ज्ञान इति परित्यजति (तादृशेति, न दोषः—न सिद्धसाधनम् । घटभिन्नत्वादिसामान्यलक्षणप्रामाण्यप्रत्यक्षे तस्य विषयत्वेऽपि प्रकारत्वाभावादिति भावः । घटत्वप्रकारकत्वत्वादिसामान्यज्ञानं घटत्वप्रकारकत्वाद्याश्रयज्ञानमन्तरेण न सम्भवति, प्रकारितात्वादिरखण्डधर्मश्च सिद्धान्तविरुद्ध इति तादृशसामान्योपेक्षा । प्रामाण्यत्वरूपपक्षतावच्छेदकावच्छेदेन तादृशज्ञानविषयत्वसाधने नेदं सिद्धसाधनम्, घटभिन्नत्वादिप्रकारकप्रामाण्यमहद्विषयतायाः प्रामाण्यत्वानवच्छिन्नत्वात्, अत उक्तविवक्षायाः प्रयोजनान्तरमाह (न वेति) निषेध्यस्य—तादृशज्ञानप्रामाण्याभावरूपनैयायिकसाध्यस्य । (अप्रसिद्धिरिति) वस्तुमात्रस्यैव सामान्यलक्षणादिजन्यप्रमाविषयकज्ञानाजन्यज्ञानविषयत्वेन तादृशज्ञानविषयत्वस्य केवलान्वयित्वादिति भावः । प्रकारत्वापर्यन्तनिवेशे निषेध्यप्रसिद्धिमुपदर्शयति (तस्मिन्नेवेति) । द्वितीयकल्पाभिप्रायेणेदम्, प्रथमकल्पे तज्ज्ञानादेरप्रामाण्यस्यान्यत्रापि प्रसिद्धेः (सुलभत्वादिति) । तज्ज्ञानस्य त-

[दी] तज्ज्ञानघटितविशिष्टान्तरे तत्प्रसिद्धिरित्यपि केचित् । विधिप्रसिद्धि- स्तु घटत्वप्रकारकत्वादौ,

---

[ग] ज्ञातत्वरूपविशेषणज्ञानजन्यतया नैयायिकसिद्ध एव ज्ञाने प्रकारतया तद्विषयज्ञानप्रकारत्वाभावस्य तत्र सम्भवादिति भावः ।

न च प्राथमिकतज्ज्ञानप्रत्यक्षादावपि मीमांसकमते तज्ज्ञानस्य प्रकारतया तादृशज्ञानस्य च ज्ञानविषयकज्ञानजन्यत्वेन नैयायिकसिद्धाद्वितीयानुव्यवसायादिभिन्नतया मीमांसकमते द्वितीयकल्पे निषेधाप्रसिद्धिर्दुर्वारैवेति वाच्यम्,–स्वरूपसम्बन्धावच्छिन्नप्रकारताया द्वितीयकल्पे साध्यघटकतोपगमेन स्वरूपसम्बन्धेनावृत्तौ तज्ज्ञाने द्रव्यत्वादावपि परमते निषेधस्य प्रसिद्धेः सम्पादनीयत्वात् । मिश्रादिमते स्वरूपसम्बन्धेनावृत्तावपि तेन सम्बन्धेन अन्यथाख्यातिप्रकारत्वस्य सत्त्वेऽपि तादृशावृत्तेः सर्वस्य तादृशभ्रमे भानाभावात् क्वचिदभावप्रसिद्धिसम्भवात् । तज्ज्ञानपर्यन्तानुधावनं च प्रकारतावच्छेदकसम्बन्धविशेषाप्रवेशेऽपि स्वमते तत्र प्रसिद्धिः सम्भवतीत्यभिप्रायात् । मतान्तरमाह (तज्ज्ञानघटितेति) विशेषणतया तज्ज्ञानं यद्घटकं तादृशविशिष्टे इत्यर्थः । तादृशविशिष्टस्य न्यायमते तज्ज्ञानविषयकज्ञानजन्यज्ञान एव विषयत्वात् । एवं च–विषयतामात्रस्य साध्यघटकत्वेऽपि निर्वाहो बोध्यः । कश्चिदित्यनेनास्वरसः सूचितः । केवले विशेष्ये तादृशज्ञानाजन्यज्ञानविषयत्वसत्त्वेन विशिष्टेऽपि विशेष्ये तदभावस्य दुर्लभत्वमिति तद्बीजम् । प्रथमकल्पे विधिप्रसिद्धिस्थलमाह (विधीति) (घटत्वप्रकारकत्वादाविति) अभावत्वप्रतियोगित्वयोरिव न्यायमते प्रकारित्वादेरनुपस्थितस्य प्रकारत्वात्, व्यवसायानन्तरक्षणोत्पन्नानुव्यवसाये व्यवसायविषयकज्ञानजन्यत्वेन नैयायिकसिद्धभिन्ने व्यवसायज्ञानात्मकविशेष्यनिरूपितप्रकारताया घटत्वप्रकारकत्वादौ सत्त्वादिति भावः ।

यद्यप्येवं प्रामाण्ये निषेधरूपनैयायिकसाध्यस्य बाधो दुर्वारः, प्रामाण्यस्यैव घटत्वप्रकारकत्वत्वादिमात्रपुरस्कारेण तत्त्वेऽपि ज्ञानविषयकज्ञानाजन्यज्ञानविषयत्वेन तत्र तदभावस्य दुर्घटत्वात्; तथापि विषयेऽपि

[दी] घटादौ वा । मद्दाना ज्ञानतालिङ्गकानुमितौ तस्य प्रकारत्वसम्भवे तु तस्यामपि ।

---

[ग] विषयतानवच्छेदकरूपावच्छेदेन विषयत्वाभावमभ्युपेत्यैतदभिधानम् । अन्यथा प्रकारित्यादिकमप्युपस्थित न प्रकार इति मतमवलम्ब्य बाधः परिहरणीयः । ज्ञानांशे विषयितासम्बन्धेन प्रथमानुव्यवसाये प्रकारीभूत विषय एव व्यवसायकालीनोपस्थितवशात्तदनन्तरतत्प्रत्यक्ष एव तत्प्रकारीभूतज्ञानत्वादौ च तज्ज्ञानरूपघटत्वप्रकारकत्वाद्याश्रयविषयकज्ञानानन्यज्ञानप्रकारकत्वप्रसिद्धि । आदिपदाद्वेव च तत्परिग्रहः । द्वितीयकल्पे ज्ञानावृत्तावपि वस्त्वन्तरे प्रसिद्धिसौलभ्यमित्याह (घटादौ वेति) स्वरूपसम्बन्धावच्छिन्नप्रकारताया द्वितीयकल्पे विवक्षितत्वे अन्यथाऽप्यग्त्यनङ्गीकर्तृगुरुमते तादृशसम्बन्धेनावर्तमानघटादौ तादृशी प्रकारिता न सम्भवतीत्याशयेन आदिपद तादृशसम्बन्धेन वृत्तिमतामभावादीना परिग्रहकम् । विनेप्यमूतनैयायिकसिद्धभेदेन तादृशज्ञानजन्यतया नैयायिकसिद्धभिन्न ज्ञानमज्ञायामि भट्टमतमात्रसिद्धप्रसिद्धिस्तस्मात् (भट्टानामिति) (प्रकारकत्वसम्भवेत्विति) ज्ञानरूपसाध्यांशे समानकालीनत्वसम्बन्धेन प्रकारत्व इत्यर्थ । तस्यामपि—ज्ञाततायामपि । ज्ञानांशे साध्यत्वघटितसाध्यस्यापि प्रसिद्धिरित्यर्थ । लिङ्गस्य साध्यविशेषणतयानुमितौ भान सविवादमित्यत 'सम्भवे' त्वित्यभिहितम् । द्वितीयकल्पे घटादिनिष्ठव्यक्तज्ञाततात्प्रत्यक्षप्रकारतामादायापि तेषा स्वमते साध्यप्रसिद्धिर्द्रष्टव्या ।

यद्यपि ज्ञाततालिङ्गकानुमितिप्रकारतामादायापि ज्ञानत्वादावपि प्रसिद्धिसम्भव, तथापि तत्रोभयमत एव तत्प्रसिद्धेस्तस्य घटत्वप्रकारत्वादावित्यादिपदेन प्रागुपादानात् ज्ञाततापर्यन्तानुधावनम् । ज्ञाततात्वे ज्ञानांशे साध्यत्वरूपसाध्यवत्त्वाभावात्तदुपेक्षितम् ।

ननु नैय्यायिकसिद्ध मत्रादिप्रवृत्तिजनकत्वादि लिङ्गकानुमित्या प्रामाण्यप्रकारेण ज्ञानावगाहने सति दर्शितसाध्यप्रसिद्धौ तन्मूलकज्ञानतालिङ्गकानुमित्या प्रामाण्यग्रहणेन भट्टमते दर्शितसाध्यनिर्वाहादनुव्यवसायस्थलीयपूर्वाप्र

[दी] तादृशज्ञानविषयकसमानाधिकरणज्ञानाजन्यसमानाधिकरणत्वेनान्ति[म] ज्ञानं विशेष्यम् ।

केचित्तु तादृशज्ञानाजन्यत्वेन यन्नैयायिकसिद्धं तद्भासत्वं वाच्यम्, व्यवसायानन्तरत्रिचतुरक्षणाभ्यन्तरोत्पन्नं ज्ञानं भट्टैर्ज्ञाततालिङ्गकानुमितित्वेन स्वीकृतं

---

[ग] दीतत्वज्ञानविषयकसामान्यमुखव्याप्त्यधीनज्ञाततालिङ्गकानुमितेर्न प्रामाण्यावगाहिता तन्मते सिद्ध्यति, न वा तावतैव तेषां स्वतस्त्वसिद्धिः, प्रामाण्ये तादृशप्रामाण्यभासकसामग्र्या यथार्थेच्छादिलिङ्गकप्रामाण्यविशिष्टानुमितिसामग्रीतोऽविशेषात्, नैयायिकासिद्धज्ञाततालिङ्गकत्वेन विशेषस्य स्वतस्त्वसम्पादकत्वोपगमे परिभाषामात्रोपगमेन स्वतः परतो वेति विवादपर्यवसानात्, ज्ञातताख्यपदार्थान्तरतदभाव एव विवादविश्रामादित्याशङ्क्य उक्तानुमितिव्यावर्तनाय विशेषणान्तरं प्रवेशयति (तादृशज्ञानेति) प्रकृतप्रामाण्याश्रयज्ञानेत्यर्थः । सामानाधिकरण्यद्वयं तन्निरूपितम् । एतच्च विशेषणं यथाश्रुतमूललभ्यमेव । एतद्विशेषणेन च पूर्वोपदर्शितयथार्थसंस्कारादिलिङ्गकसामान्यव्याप्त्युपष्टम्भानुमितिप्राप्ततया अर्थान्तरवारणासम्भवस्य दर्शितत्वात्तादृशज्ञानजन्यतया नैयायिकसिद्धभिन्नत्वरूपोक्तविशेषणोपादानमित्यवधेयम् ।

दर्शितज्ञाततालिङ्गकानुमित्या अर्थान्तरवारणाय तादृशज्ञानजन्यत्वेन नैयायिकसिद्धभिन्नत्वमुपेक्ष्य तादृशज्ञानजन्यभिन्नत्वेन नैयायिकसिद्धत्वं केचिन्निवेशयन्ति विशेषणम्, उक्तज्ञाततालिङ्गकानुमितेस्तादृशज्ञानजन्यतया नैयायिकसिद्धभिन्नत्वेऽपि न तदजन्यतया नैयायिकसिद्धत्वमतस्तद्भासतया न सिद्धसाधनमिति वदन्ति, तन्मतमुपन्यस्यति (केचित्त्विति) मन्वेयमनुव्यवसायस्थानीयज्ञाततालिङ्गकानुमितेरपि भट्टमतेऽसद्भावः, तस्या नैयायिकासिद्धत्वादित्यत आह (व्यवसायेति) व्यवसायानन्तरं ज्ञानोत्पत्त्यधिकरणान्यत्साक्षाद्विनिष्क्रमणादाय क्षणत्रयस्य क्षणचतुष्टयस्य वा मध्ये जायमानमित्यर्थः । ज्ञातताद्वितीयक्षणे ज्ञाततायाः प्रत्यक्षव्याप्तिस्मरणयो भट्टमते युगपदुत्पादसम्भवाद्विशिष्टपरामर्शपर्यन्तमप्यनुमितावनपेक्षायां तत्तृ-

[दी] नैयायिकैस्साक्षात्कारित्वेनैवाभ्युपगम्यत इति न तन्मतापरिग्रह इत्याहुः ।

नन्वयोगिना तादृशाश्रयप्रतीत्यापि ज्ञानेऽपूर्वप्रामाण्यग्रहान्निषेधसाधने बाधः,

---

[ग] तृतीयक्षण एव ज्ञानानुमितेरसम्भव, विशिष्टपरामर्शापेक्षाया तदा विशिष्टपरामर्शोत्पत्त्या चतुर्थक्षणेऽनुमितिरित्याशयेन "त्रिचतुरे" त्युक्तम् (नैयायिकैस्साक्षात्कारित्वेनैवेति) साक्षात्कारित्वव्यवसायानन्तरक्षणोत्पन्नत्वाभ्यामेवेत्यर्थः । व्यवसायानन्तरक्षणोत्पन्नतया स्वीकृतत्वेन व्यवसायविषयकज्ञानाजन्यतया स्वीकृतत्वलाभ । व्यवसायानन्तरक्षणोत्पन्नतास्वीकारे अनुमितित्वोपगमो न सम्भवतीति तद्धेतुतया साक्षात्कारित्वोपगमाभिधानम् । एवकारेणानुमितित्वव्यवसायतृतीयक्षणोत्पन्नत्वादिस्वीकारव्यवच्छेद । न तन्मतापरिग्रह —न भट्टमतसिद्धज्ञाततालिङ्गकानुमित्यपरिग्रह । तस्या ज्ञाततालिङ्गकानुमितित्वेन न्यायमतासिद्धत्वेऽपि तज्ज्ञानविषयकज्ञानाजन्यज्ञानत्वेन तन्मतसिद्धतयैव तत्परिग्रहसम्भवादिति भाव । तादृशाश्रयम्—प्रकृतप्रामाण्याश्रयम् । अपूर्वप्रामाण्यग्रहात्—पूर्वाप्रतीतज्ञानवृत्तिप्रामाण्यस्य योगजधर्मबलेन तज्ज्ञानादौ ग्रहात् । (निषेधसाधने बाध इति) तन्मते योगिनामभावेन तद्व्यवस्थापनं विना सिद्धसाधनाव्यवस्थितेरिति तथोक्तम् ।

न च प्रामाण्यज्ञानं विना प्रामाण्यस्य प्रकारत्वासम्भवान्नायं दोष, योगजधर्मादेव प्रथमं प्रामाण्यग्रहेण विशेषणज्ञाननिर्वाहे तज्ज्ञानेऽपि निखिलवस्तुभाने बाधकाभावात् तादृशज्ञानजन्यतयैव प्रामाण्यप्रकारकज्ञानस्य तदाश्रयविषयकज्ञानाजन्यत्वं दुर्घटम्, प्रामाण्यस्य तद्वति तत्प्रकारकत्वविशिष्टज्ञानत्वरूपत्वे तद्ज्ञानान्तर्गतमेव वैशिष्ट्यघटकतज्ज्ञानमात्रमिति वाच्यम्, प्रमाज्ञानं विनापि प्रमापदप्रवृत्तिनिमित्तत्वादिना प्रकृतप्रामाण्यरूपविशेषणस्मरणादिसहकृतात्प्रामाण्यघटकप्रकारित्वादिस्मरणसहकृताद्वा योगजधर्मात्तत्प्रकारकप्रत्यक्षसम्भवात् ।

न चैवं वक्ष्यमाणरीत्या योगिज्ञानवारणेऽपि उपदर्शितस्मरणादिनान्यप्रामाण्योपनीतभानं ज्ञानादौ लौकिकं प्रामाण्याश्रयविषयकज्ञानाजन्यमपि

[दी] अत्र केचित्–तत्प्रामाण्यस्याश्रयो न वक्तव्यः, अपि तु स्वग्राह्यप्रामाण्यस्य, तथा च तज्ज्ञानसमानाधिकरणस्वग्राह्यप्रामाण्याश्रयज्ञानाविषयकज्ञानजन्यं यत् तद्भिन्नतज्ज्ञानसमानाधिकरणज्ञानग्राह्यं न वेत्यर्थः,

---

[ग] सम्भवतीति निषेधे बाधो दुरुद्धर एवेति वाच्यम्, उपनीतभानस्थले दर्शितनियमसत्त्वे प्रामाण्याश्रयज्ञाने प्रामाण्यभानं विना तदंशे प्रामाण्योपनीतभानासम्भवात् तज्ज्ञानांशे ग्राह्यत्वविरहस्य बाधासम्भवात् । प्रमापदप्रवृत्तिनिमित्तत्वादिनोपस्थितप्रकृतप्रामाण्यरूपसामान्यप्रत्यासत्तिजन्यतत्प्रकारकप्रत्यक्षमादायापि न बाधः, तत्सम्बन्धेन सामान्यप्रकारमेव ज्ञानं तत्सम्बन्धेन सामान्याश्रयभासकमिति मतस्यावलम्बनीयत्वात्, तादृशज्ञानस्य च प्रमारूपस्य प्रमाविशेष्यकत्वात् । व्यधिकरणप्रकारकाजन्यत्वेन अन्तिमज्ञानं विशेष्याप्रमाविशेष्यकप्रामाण्यरूपसामान्यप्रत्यासत्तिजन्यप्रहस्य वारणीयत्वात् । तावतैव च तज्ज्ञानविशेष्यत्वानिरूपितत्वाविशेषितत्प्रकारतामात्रस्य ग्राह्यतास्वरूपत्वकल्पे भ्रमरूपं पक्षं व्याप्यत्वघटकतयापि प्रमात्वरूपसाध्याश्रयत्वेन भ्रममवगाहमानेन परामर्शेन जनितां प्रामाण्यानुमितिमादाय निषेधस्य बाधवारणं सम्भवतीति ध्येयम् । तदाश्रयपदेन तदाश्रयग्राह्यविषयार्थकतया भ्रमजन्यज्ञानव्यावृत्तिरित्यपि केचित् ।

मिश्रानुसारेण समाधानमुपक्रमते (केचित्त्विति) न वक्तव्यः—न तज्ज्ञानपदेन विवक्षणीयः । स्वपदस्याजन्यज्ञानरूपानुयोगिपरत्वे चरमज्ञानपदेनानुव्यवसायादीनां न्यायमते नोपादानसम्भवः, तन्मते प्रामाण्यस्य तद्ग्राह्यत्वादिति प्रामाण्यग्राहकं च ज्ञानं तन्मते स्वग्राह्यप्रामाण्याश्रयज्ञानजन्यमेवेति स्वपदार्थाप्रसिद्धिरतः प्रतियोगिनि स्वत्वमन्तर्भाव्य भेदकूटं निवेशयति (तथा चेति) (तज्ज्ञानसमानाधिकरणेति) तज्ज्ञानसमानाधिकरणं च यत्स्वग्राह्यप्रामाण्याश्रयतज्ज्ञानविषयकं ज्ञानं तज्जन्यत्वेन नैयायिकसिद्धं यत्स्वं तदन्यद्यत्तज्ज्ञानसमानाधिकरणं ज्ञानं तद्ग्राह्यं न वेत्यर्थः । प्रथमसमानाधिकरणान्तानुपादाने यद्यपि स्वग्राह्यप्रामाण्याश्रयाविषयकत्वेन परमेश्वरज्ञाननिवेशेऽपि न न्यायमते तदजन्यास्मदादिज्ञानाप्रसिद्धिः, प्रामाण्यवि-

[ग] षयकानुमित्यादेरेव स्वपदेनोपादानात्तदन्यत्वरूपाजन्यान्तार्थस्य प्रामाण्याविषयकज्ञान एव प्रसिद्धे, प्रामाण्याविषयकं च ज्ञानं न्यायमते प्रामाण्यविषयकत्वेन मीमांसकमतसिद्धमनुव्यवसायादिकमपीति निषेधे साध्ये घटत्ववतीत्यादिप्रामाण्यस्य तद्ग्राह्यत्वासिद्धेरप्रत्यूहतया तत्पक्षकविप्रतिपत्तौ न काचिदनुपपत्तिः । प्रामाण्यघटितप्रामाण्यपक्षकस्थले विषयीभूतप्रामाण्यविषयकस्येदं प्रमेत्यादिज्ञानानुव्यवसायादेर्न्यायमते स्वग्राह्यप्रामाण्याश्रयघटादिज्ञानविषयकेश्वरज्ञानजन्यतया तदजन्यज्ञानाग्राह्यत्वस्यैव तन्मते साध्यतयाऽनुव्यवसायादेः प्रामाण्याग्राहकत्वासिद्धया उद्देश्यासिद्धिस्तु प्रथमसमानाधिकरणान्तोपादानेऽपि तादृशानुव्यवसायादेः स्वग्राह्यविषयीभूतप्रामाण्याश्रयघटादिज्ञानविषयकेन तद्धर्मिकप्रामाण्यप्रकारकोक्तव्यवसायरूपतज्ज्ञानसमानाधिकरणज्ञानेन जनितत्वादसङ्ग्रहेण समानैव, तादृशप्रामाण्यस्य पक्षबहिर्भावेन समाधिरपि समान एव, तथापि घटादिज्ञानानुव्यवसायस्य न्यायमते घटत्वादिप्रकारकत्वेन तत्प्रामाण्यावगाहितया स्वग्राह्यप्रामाण्याश्रयव्यवसायविषयकपरमेश्वरज्ञानजन्यतया प्रामाण्यत्वेन ग्राह्यतापर्यन्तस्य चा विवक्षितत्वात्कथितं यदन्यत्वं तदन्यत्वं दुर्घटम्, एवं पुरुषान्तरीयप्रमाविषयकान्यपुरुषीयप्रामाण्यविषयकज्ञानानुव्यवसायस्य ग्राह्यं तद्विषयीभूतप्रामाण्यं तदाश्रयपुरुषान्तरीयज्ञानविषयके व्यवसाये तज्ज्ञानसामानाधिकरण्यासत्त्वात्प्रथमसमानाधिकरणपदोपादाने तादृशानुव्यवसायस्याजन्यान्तेनोपादानसम्भव, तदनुपादाने तादृशानुव्यवसायस्य स्वग्राह्यप्रामाण्याश्रयविषयकेनान्यपुरुषीयज्ञानेन भगवज्ज्ञानेन च जनितत्वान्न तदुपादानसम्भव इति प्रथमसमानाधिकरणपदोपादानम् । एवं प्रामाण्यधर्मत्वादिप्रकारकतद्विशेष्यकज्ञानीयप्रामाण्यस्य यत्र पक्षता तत्र तादृशज्ञानानुव्यवसायस्य प्रामाण्यधर्मत्वादिप्रकारत्वावगाहिनो न्यायमतेऽपि प्रामाण्यग्राहकतया स्वग्राह्यप्रामाण्याश्रयविषयकेश्वरज्ञानजन्यतया प्रथमसमानाधिकरणान्तानुपादाने न सङ्ग्रहः स्यादिति तत्सङ्ग्रहायापि तदुपादानम् । द्वितीयसमानाधिकरणान्तव्यावृत्तिः पूर्ववदेव । मिश्रमते जन्यभिन्नत्वानिवेशोऽपि न क्षतिः, तन्मते स्वप्रतियोगिग्राह्यप्रामाण्याश्रयविषयकज्ञानप्रागभावप्रयुक्तं यद्यत्त्वं तदन्यप्रागभाव-

[दी] योगिप्रत्यक्षं च ज्ञानभिन्नत्वेनात्ममननजन्यम्; वस्तुतो ज्ञानभिन्नत्वेनात्ममननं; निखिलज्ञानविषयकतया सकलप्रामाण्याश्रयविषयकमेवेति ।

परेतु—अनागताविषयकत्वेनान्तिमं ज्ञानं विशेष्यम्,

---

[ग] प्रतियोगिज्ञानविषयत्वस्यैव विवक्षणीयत्वात् । उक्तविवक्षया योगिज्ञानव्यावृत्तिं स्पष्टयति (योगिप्रत्यक्षं चेति) योगजधर्माधीनं प्रत्यक्षमित्यर्थः । (ज्ञानभिन्नत्वेनात्ममननजन्यमिति)

यद्यपि तादृशमननस्य निदिध्यासनद्वारा सार्वज्ञ्यसम्पादकधर्मविशेषहेतुतया योगजधर्मजन्यप्रत्यक्षे प्रयोजकत्वमेव, न तु जनकत्वम्, तथापि जन्यपदस्य प्रयोज्यपरत्वान्नासङ्गतिः, साध्येऽपि अजन्येत्यनेन अप्रयोज्यताया एव विवक्षणीयत्वात् । अत एव मिश्रोक्तनिदिध्यासनमुपेक्ष्य मननमेव तन्मूलभूतमुपात्तम् । निदिध्यासनस्यापि जनकताया अप्रामाणिकत्वात्प्रयोज्यघटितसाध्यस्यावश्यं विवक्षितत्वे निदिध्यासनमूलभूतमननप्रयोज्यतयापि तद्धारणं सम्भवतीत्याशयात् । आत्मनो नित्यत्वादिबोधकवाक्याज्जन्यत्वादिसामान्यधर्मावच्छिन्नभिन्नत्वेनैवात्मनश्श्रवणमस्ति, न तु ज्ञानत्वादिरूपविशेषधर्मावच्छिन्नभिन्नतया, तादृशधर्मावच्छिन्नबोधकागमाश्रुतेरित्याशयेन श्रवणमुपेक्षितम् । श्रवणे ज्ञानभानानियमात्, ज्ञानविषयकज्ञानापेक्षायामेव विषयीभूतज्ञानस्य भावयत्किञ्चित्प्रामाण्याश्रयतया सिद्धसाधनवारणसम्भवात् । ज्ञानत्वावच्छिन्नभिन्नत्वेन आत्ममननञ्चावश्यकम्, विज्ञानवादिसमुत्थापितज्ञानाभेदवासनानिवर्तकतद्भेदसाक्षात्कारनिर्वाहकतद्दीर्घध्यानधारामूलभूतज्ञानभेदवासनाबीजत्वात् । ज्ञानत्वावच्छिन्नभिन्नत्वेन आत्मनोऽनुमितौ भेदप्रतियोगितया सकलज्ञानभाने बाधकाभावः, सामान्यलक्षणप्रत्यासत्त्या अनुमितिजनकसाध्यप्रसिद्धौ सकलतद्भानात्, विशेषाभावकूटस्य सामान्याभावत्वमते सामान्याभावभाने सकलप्रतियोगिभानमावश्यकमेव, सामान्यधर्मविशेषितस्वस्वप्रतियोगिप्रकारेणैव तदभावानां भानात्, अन्यथा भ्रमत्वापत्तेः, एवञ्च प्रकृतप्रामाण्याश्रयप्रमाणनिवेशेऽपि योगिप्रत्यक्षवारणसम्भव इत्याशयेनाह (वस्तुत इति) अत्रैव समाधाने स्वनिर्भरः (अनागतेति) अनागतत्वं ग्राहकज्ञानाधिकरणकालापेक्षया विचारकाल

[दी] नोपादेयं च तत्र सामानाधिकरण्यम्, अनागतज्ञानप्रामाण्यन्तु न पक्षः, पूर्ववर्तित्वादिरूपसामान्यलक्षणाजन्यज्ञानन्तु न तेन वार्यते ।

---

[ग] पेक्षयैव वा ग्राह्यम्, अन्यथा जन्यमात्रस्यैव किञ्चित्कालापेक्षया अनागतत्वेन प्रामाण्यग्राहकत्वेनाभिमतानामनुव्यवसायादीनां अनागतव्यवसायादिविषयकत्वेन नित्यमात्रविषयकज्ञानस्यैव अनागताविषयकतया बाधापत्तेः ।

नन्वेवं योगिज्ञानस्येव परमेश्वरज्ञानस्याप्यनागतविषयकत्वेन वारणादन्तिमज्ञाने तज्ज्ञानसामानाधिकरण्यविशेषणमनुपयुक्तमित्याशङ्क्य तत्परित्यजति (नोपादेयञ्चेति) नन्वनागताविषयकत्वेन अन्तिमज्ञानविशेषणे अनागतत्वप्रागभावासमानकालीनत्वादिप्रकारकज्ञानप्रामाण्ये बाध, तादृशप्रामाण्यग्रहस्य तद्घटकानागतविषयकत्वनियमादित्यत आह (अनागतेति) अनागतविषयकज्ञानमात्रस्य प्रामाण्यं पक्षाद्बहिर्भावनीयमित्यर्थः । घटत्ववतीत्यादिप्रामाण्यस्य अनागतघटादिघटितत्वेऽपि अतीतादिघटमात्रविषयकानुव्यवसायादिनापि ग्रहात् साध्यसत्त्वेन न पक्षबहिर्भावः ।

यदि च विशेष्यव्यक्तिभेदेन घटत्ववतीत्यादिकं प्रामाण्यमपि भिद्यत एव, तद्घटितत्वात्, तथा चानागतघटादिव्यक्तिघटितस्य नानागतादिविषयकज्ञानमात्रग्राह्यतेति बाधो दुष्परिहर एवेति मन्यते, तदा तत्कालीनविचारे तदनन्तरोत्पत्स्यमानघटादिव्यक्तिघटितं घटत्ववतीत्यादिकं पक्षाद्बहिर्भावनीयमेव, ग्राहकज्ञानापेक्षयानागतत्वाविशेषेऽनागतघटादिघटिततादृशप्रामाण्यमपि तादृशघटादिपूर्वकालेतरकालीनतज्ज्ञानानुव्यवसायादिना स्वापेक्षयानागतघटादिव्यक्त्यन्तरमनवगाहमानेन गृह्यत इति तत्र साध्यसत्त्वेन तस्य पक्षान्तर्भावोपि सम्भवति, तादृशघटादिव्यक्तिपूर्वकालीनेनैव अनुव्यवसायादिना तद्व्यक्तिघटितप्रामाण्यं विषयीकृतम्, तादृशव्यक्तेः प्रामाणिकत्वे तद्व्यक्तिघटितमेव तत्पक्षाद्बहिर्भावनीयमिति बोध्यम् । नन्वेवं घटभिन्नत्वादिसामान्यजन्यज्ञानस्य अनागतविषयकत्वविशेषणेनैव वारणे पूर्वोक्तप्रकारतानिवेशव्यावृत्त्यसङ्गतिरित्यत आह (पूर्ववर्तित्वादीति) तेन—अनागताविषयकत्वविशेषणेन (न वार्यत इति) तथा च तादृशज्ञानविषयतावारकत्वेनैव तादृश-

अन्येतु-तज्ज्ञानभिन्नज्ञानाविषयकत्वेन तद्विशेष्यम्, इत्थं च निषेधो ज्ञानान्तरे सुलभ इति ।

अन्ये तु-तद्वति तत्प्रकारकत्वेन विशिष्टं ज्ञानत्वं प्रामाण्यम्, वैशिष्ट्यं च सामानाधिकरण्यम्, तच्चाश्रयगर्भम्; न च नैय्यायिकानां विशेषणज्ञानं विना विशिष्टज्ञानसम्भवः,

---

[ग] प्रकारताविवक्षणस्यावश्यकतेति भावः (तज्ज्ञानभिन्नेति) प्रकृतप्रामाण्याश्रयभिन्नेत्यर्थः । प्रतियोगिकोटौ ज्ञानत्वप्रवेशवैयर्थ्यात् अनुयोगिनि-ज्ञानत्वविशेषणं अप्रसिद्धिवारकम्, सविषयमात्रस्यैव ज्ञानादिभिन्नविषयत्वात् । तत्-अन्तिमज्ञानम् । अनेनापि विशेषणेन विश्वविषयकस्य योगिज्ञानस्येव भगवज्ज्ञानस्यापि वारणात्, तत्र सामानाधिकरण्यविशेषण-मेतत्कल्पेऽप्यनुपादेयम् । एवं च प्रकारतापर्यन्तस्य स्वतो ग्राह्यतारूपत्व-विरहेऽपि न निषेधाप्रसिद्धिरित्याह (इत्थं चेति) ज्ञानान्तरे-तज्ज्ञानभिन्नज्ञाने (सुलभ इति) तज्ज्ञानभिन्नज्ञानस्य तज्ज्ञानभिन्नज्ञानाविषयकज्ञानाविषयत्वास-म्भवादिति भावः ।

एतत्कल्पे पूर्वकल्पे च ज्ञानत्वादिप्रकारकज्ञानानुव्यवसायस्य सामान्यलक्षणया यावज्ज्ञानाविषयकत्वे बाधकाभावान्न्यायमते प्रकृतप्रामाण्याश्रयभिन्नज्ञानाविषयकत्वेन अनागताविषयकत्वेन च तदुपग्रहः, तादृशज्ञानीयप्रामाण्ये परतस्त्वसाधने सिद्धसाधनावश्य पक्षबहिर्भावावश्यकत्वे सामान्यतो ज्ञानविषयकज्ञानाजन्यत्वनिवेश एव सम्भवति, तादृशज्ञानजन्यतया नैयायिकसिद्धभिन्नत्वस्यावश्यकतया भट्टमतपरिग्रहस्यापि सम्भवादित्यस्वरसः । (तच्चाश्रयगर्भमिति) तथा च प्रामाण्याश्रयज्ञानस्य प्रामाण्यघटकतया तद्विषयकज्ञानजन्यतयैव योगजधर्मजन्यप्रामाण्यप्रत्यक्षवारणं सम्भवतीति भावः । आश्रयघटितत्वेऽपि योगिनां तज्ज्ञाने कथमाश्रयज्ञानापेक्षेत्याशङ्कायामाह (न चेति) नैयायिकानामित्यनेन स्वनस्त्वादिना मीमांसकानां विशिष्टबुद्धौ विशेषणज्ञानहेतुत्वानङ्गीकारात् प्रामाण्यघटकतदाश्रयज्ञानस्य पूर्वमसत्त्वेऽपि प्रथमानुव्यवसायादिना तन्मते प्रामाण्यग्रहसम्भवात् बाध इति दर्शितम् ।

[दी] योगजधर्मस्य च निर्विकल्पकज्ञानजनकत्वं सार्वज्ञ्यसम्पादकमनुगुणमेवेति, यदि च किञ्चित्प्रामाण्यं विनाश्रयग्रहं दुर्ग्रहम्, तदा तत्पक्षे नान्तर्भावनीयम्।

---

[ग] ननु योगिज्ञाने विशेषणधियो हेतुत्वे लौकिकसन्निकर्षवद्योगजधर्मस्यापि निर्विकल्पकजनकत्वोपगमः स्यादित्यत्रेष्टापत्तिमाह (योगजधर्मस्येति) (सार्वज्ञ्यसम्पादकमिति) स्वरूपतो घटत्वादिप्रकारकस्य ॥ घटो न वेत्यादिसंशयनिवर्तकस्य सघट इत्याकारकनिखिलधर्मज्ञानस्य सम्पादकमित्यर्थः। स्वरूपतो घटत्वादिप्रकारकबुद्धौ स्वरूपतस्तदवगाहिज्ञानस्य हेतुतायाः सामान्यलक्षणया सार्वज्ञ्यवारणायावश्यवक्तव्यतया निर्विकल्पकं विना तादृशज्ञानासम्भवादिति भावः।

न च विशिष्टबुद्धिं प्रति विशेषणधियो हेतुत्वेऽपि प्रामाण्यघटकविशेषणानां ज्ञानसत्त्वे ज्ञानस्याज्ञातस्यापि संसर्गतया भाने बाधकाभावः, संसर्गस्याप्रकारत्वादिति कथं योगिज्ञानं वारणीयमिति वाच्यम्,—विशिष्टविशेषणकज्ञाने विशिष्टस्यैव विशेषणस्य धियो हेतुतया विशिष्टप्रामाण्यप्रकारकज्ञाने विशिष्टप्रामाण्यज्ञानहेतुताया आवश्यकत्वेन विशिष्टप्रामाण्यज्ञानस्य तद्घटकाश्रयविषयकत्वनियमेन विशिष्टप्रामाण्यप्रकारकबुद्धेस्तदाश्रयज्ञानाजन्यत्वासम्भवात्। तत्प्रकारकत्वसामानाधिकरण्यविशिष्टमेव वा ज्ञानत्वपक्षे, तद्भाने सामानाधिकरण्यघटकस्याश्रयस्य प्रकारतानियमात् तज्ज्ञानापेक्षा निष्प्रत्यूहैव।

ननु सर्वं ज्ञानं गुण इत्यादिज्ञानीयसर्वविशेष्यताघटितप्रामाण्यं सर्वविषयकव्यवसायाधीनेनैव अनुव्यवसायेन मिश्रमते गृह्यते, तथा च तन्मते तत्र बाधः, तादृशव्यवसायस्य तादृशप्रामाण्याश्रयविषयकत्वनियमादित्यत आह (यदि चेति) (विनाश्रयग्रहं दुर्ग्रहमिति) आश्रयस्यैव नियमत आश्रयग्रहरूपत्वादिति भावः।

अत्र च ज्ञानमित्याद्याकारकस्यैव सर्वं ज्ञानमित्याकारकस्यापि सर्वज्ञानविषयकत्वानियमः,

[ दी ] केचित्तु—तज्ज्ञानविषयकेत्याद्युक्तिमहिम्ना नैयायिकसिद्धप्रामाण्यग्राहकताकभिन्नज्ञानग्राह्यत्वमेवोक्तम् । निषेधप्रसिद्धिः परेषां प्रामाण्यत्व-

---

[ग] न च पर्याप्तिसम्बन्धेन सर्वत्वप्रकारकस्य सर्वत्वपर्याप्त्यधिकरण सर्वविषयकत्वे तत्प्रमात्वमेव न निर्वहतीति तादृशप्रमायाः सर्वज्ञानविषयकत्वनियम इति वाच्यम्,—समुदायस्य पर्याप्त्यनुयोगित्वे तदन्तःपातिन-एकादेरपि तदावश्यकत्वात्तन्मात्रविषयकसर्वत्वज्ञानस्यापि प्रमात्वस्य दुर्निवारत्वात्; एकोऽयं द्वावित्यादिबुद्धेरप्रमात्वस्य कथञ्चिदुपपादनीयत्वात्; तथा च सर्वत्वप्रकारकज्ञानविषयकस्यापि सर्वं ज्ञानमिति प्रमात्मकज्ञानस्य सम्भवात्तदनुव्यवसायस्य दर्शितप्रामाण्याश्रयज्ञानविषयकज्ञानाजन्यत्वं सम्भवतीत्यालोच्य "यदि चे" त्युक्तम् । अत्रापि—तद्वति तत्प्रकारकत्वमात्रं प्रवृत्त्युपयुक्तं न तु तद्विशिष्टज्ञानत्वपर्यन्तम्, इत्थं च विशिष्टे स्वतस्त्वसाधने तद्वति तत्प्रकारकत्वे स्वतस्त्वसिद्धावपि विशिष्टस्य परतस्त्वसाधने तद्वति तत्प्रकारकत्वे परतस्त्वसिद्धिरिति तन्मात्रस्य पक्षत्वमुचितं न विशिष्टस्येत्यस्वरस. (उक्तिमहिम्ना-उक्तमिति) नैयायिकसिद्धप्रामाण्यग्राहकताकानुमित्यादेः मायथात्तदाश्रयविषयकज्ञानजन्यत्वादिति भावः । एवं च योगिज्ञानादेः प्रामाण्यग्राहकतया नैयायिकसिद्धतया तद्भिन्नत्वाभावेन सिद्धसाधनोद्धारः ।

अथैवमुक्तायास्तज्ज्ञाने निषेधप्रसिद्धेः अनवकाशः, नैयायिकमते यादृशज्ञानेन प्रामाण्यं नावगाह्यते तादृशेऽपि प्रत्यक्षादौ प्रामाण्याश्रयज्ञानस्योपस्थितस्य प्रकारत्वादित्याशङ्क्य अन्यत्र निषेधप्रसिद्धिं दर्शयति (निषेधेति) (प्रामाण्यत्वेति) प्रामाण्यस्य प्रमेतरवृत्तित्वादिघटितस्य प्रामाण्यविषयकज्ञानेनैव अवगाहनात्तत्र न्यायमतसिद्धप्रामाण्यविषयताकान्यज्ञानविषयत्वाभावस्य सुलभत्वादिति भावः । नैयायिकासिद्धप्रामाण्यग्राहकताकाभिन्न-प्रथमानुव्यवसायादिना मीमांसकमते प्रामाण्यत्वावच्छिन्नप्रामाण्यावगाहने प्रामाण्यत्वेन मतद्वये साध्यप्रसिद्धिरिति नाशङ्कनीयम्, तद्बुद्धिरोधकत्वावच्छि-

**[म] परतः पक्षे ज्ञात एव ज्ञाने प्रामाण्यग्रहः, स्वतस्त्वे प्रामाण्यवत एव ज्ञानस्य ग्रहात् ।**

---

[दी] प्रामाण्याभावत्वादाविति कृतं पल्लवितेन ॥

---

[भ] तद्वन्निरूपितत्वसहितप्रकारितात्वरूपाखण्डधर्मरूपप्रामाण्यत्वस्यैव मीमांसकमते अनुव्यवसायादिना ग्रहात्, न तु प्रमेतरावृत्तित्वादिघटितस्य, तस्यैव प्रकृते विवक्षितत्वात् । स्पष्टार्थं स्थलान्तरं दर्शयति (प्रामाण्याभावत्वेति)

अत्र च विशिष्टप्रामाण्यविषयकान्यज्ञाने प्रामाण्यत्वप्रामाण्याभावत्वादिघटकविशेष्यस्य विषयतया विशिष्टेऽपि विशेष्ये तदभावस्य न प्रसिद्धिसम्भव इत्यस्वरसः ॥

इति श्रीमहामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचिते
प्रामाण्यवादे

॥ द्वितीयविप्रतिपत्तिः ॥



## ॥ अथ तृतीयविप्रतिपत्तिः ॥

[प्र] स्वाश्रयग्राहकेण गृह्यत एव न वा,

---

* मतत्रयसाधारणं लघुविप्रतिपत्त्यन्तरमाह (स्वाश्रयेति) स्वाश्रयज्ञानविषयकग्रहेणैव विषयीक्रियते न वेत्येवकारव्यत्यासेन योजना । एवकारश्च यावदर्थकः, स्वपदं सामान्यतः पक्षीभूतघटत्ववतीत्यादिपरम्, तथा च तज्ज्ञानवृत्तिघटत्ववति घटत्वप्रकारकत्वं स्वाश्रयज्ञानविषयकयावद्ग्रहप्रकारो न वेति फलितम् । ज्ञानभेदेन घटत्ववति घटत्वप्रकारकत्वादेर्विभिन्नत्वे तु स्वाश्रयपदं पक्षीभूतप्रामाण्यव्यक्त्याश्रयपरम्, तथा च तज्ज्ञानवृत्तिघटत्ववति घटत्वप्रकारकत्वं तज्ज्ञानविषयकयावद्ग्रहप्रकारो न वेति फलितम् । इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादित्यादिनैयायिकसिद्धप्रामाण्यानुमितिमादाय विधौ सिद्धसाधनवारणाय यावदिति ग्रहविशेषणम् । तदर्थश्च दीधितिकृन्मतोक्तरीत्या प्रथमविप्रतिपत्त्यनुसारेण बोध्यः । प्रकारता च प्रथमविप्रतिपत्तौ नव्योक्तान्यतररूपा ग्राह्या, नातस्तत्रोक्तार्थान्तरावकाशः । एवं इदं ज्ञानं निष्प्रकारकम् इदं ज्ञानं निर्विशेष्यकम् इदं ज्ञानं प्रमात्वाभाववदित्यादिज्ञानलौकिकप्रत्यक्षमादाय गुरुमिश्रयोर्मते विधौ बाधवारणाय तत्प्रामाण्यग्रहप्रतिबन्धकीभूततत्प्रामाण्याश्रयविषयकग्रहाविशिष्टत्वेन ग्रहो विशेषणीयः । तत्पदं विशिष्य पक्षीभूतप्रामाण्यपरिचयाय । वैशिष्ट्यं च स्वक्षणस्याव्यवहितोत्तरक्षणान्यतरक्षणावच्छेदेन एकात्मवृत्तित्वम् । स्वपदं च ग्रहपरम् । घटत्ववति घटत्वप्रकारकत्वाश्रयज्ञानविषयकत्वं न तादृशज्ञानांशे लौकिकविषयताशून्यत्व— साक्षात्कारत्वाविशिष्टविषयतोभयाभाव–

---

* दीधितिकृता तृतीयविप्रतिपत्तेरव्याख्यातत्वात्, गदाधरभट्टाचार्यैरपि तद्व्याख्यातृभिस्तृतीयविप्रतिपत्तेर्व्याख्यानाय, तृतीयविप्रतिपत्तेर्व्याख्यानरूपो मूलग्रन्थ एवात्र समुद्धृतेति ज्ञेयम् ।

इति- सम्पादकः ।

[मधु] त्वम्, एवं पक्षे तज्ज्ञानविषयकत्वमपि तज्ज्ञानाशे तादृशो भयाभाववत्त्वम्, तेन प्रामाण्यविषयकज्ञानस्योपनीतचाक्षुषमादाय न बाध । भट्टमतसाधारण्याय उभयाभावानुधावनम् । न च गुरुनये तादृश-विवक्षण व्यर्थम्, तेनोपनीतचाक्षुषादेरनभ्युपगमादिति वाच्यम्,—सर्वमते सर्वविवक्षासाफल्याभावेऽपि क्षतिविरहात्, यत्किञ्चिन्मते सार्थकत्वस्य क-र्तव्यत्वात्, गुरुमतेऽप्युपनीतमानस्य लाघवेन ग्रहण-स्मरणात्मकैकज्ञानरूप-तया तद्विवक्षणस्यावश्यकत्वाच्च । अत एव लौकिकविषयत्वस्यापि नाप्रसि-द्धि । सुरभि चन्दनमित्यादे लाघवेन ग्रहणस्मरणात्मकैकज्ञानरूपतया तत्र सौरभ पश्यामीत्यनुव्यवसायवारणाय वह्न्याद्यनुमितेरपि स्वांशे मानससा-क्षात्काररूपतया तत्र पि वह्निं साक्षात्करोमीत्याद्यनुव्यवसायवारणाय तद-भ्युपगमस्यानस्यन्त्वात् । परन्तु तदेतन्मते साक्षात्कारत्वभित्रि परं वि-षाद । तादृशज्ञानाशे इत्यभावान्वयि, तेन तज्ज्ञानविषयकज्ञानस्य व्यु-दास, तत्र च तादृशज्ञानाशे तादृशोभयाभाववत्त्वविरहात् ।

ननु प्रथमविप्रतिपत्त्युक्तरीत्या ज्ञानपदजन्यशाब्दबोधं ज्ञानवानित्य-नुमिति-स्मृत्यादिकं घटज्ञानपदादिजन्यशाब्दबोधं घटज्ञानवानित्याद्यनुमिति-स्मृत्यादिकं चादाय बाधो दुर्वार इति चेत् ? न—घटत्ववति घटत्वप्रकारक-ज्ञाननिष्ठप्रामाण्याविषयकपरोक्षभिन्नत्वेन ग्रहविशेषणात्, तादृशग्रहश्च तौ दृशज्ञानसाक्षात्कार तादृशज्ञानविषयकप्रामाण्यानुमित्यादिश्च । सिद्धसाधन-वारणाय परोक्षेति । परोक्षत्वं च चाक्षुषादिभेदपञ्चकवज्ज्ञानत्वम् । भट्टमत-साधारण्यायाविषयकान्त परोक्षविशेषणम् । शेष प्रथमविप्रतिपत्तौ नव्यम-तोक्तरीत्यावसेयम् ।

वस्तुतस्तु न ह्येकदा त्रिभिर्द्वाभ्यां वा विवादः, अत प्रत्येकमत-मात्रसाधारण विप्रतिपत्तिद्वयमाह, (स्वाश्रयग्राहकेणेत्यादि) इदन्तु मिश्र-मतं । स्वाश्रयग्राहकेण—स्वाश्रयविषयकसाक्षात्कारेण, गृह्यत एव न वा—प्रकारीक्रियत एव न वेत्यर्थः । भिन्नक्रमम् एवकार स्वाश्रयविषयकसाक्षा-त्कारस्य ग्राहकत्वलाभाय । अन्यथा प्रामाण्यस्मृत्यादिकालेनानुव्यवसायेन

[मधु] नैयायिकमतेऽपि प्रामाण्यग्रहात् सिद्धसाधनापत्तेः, तथा च स्वाश्रयविषयकयावत्साक्षात्कारप्रकारताबाधश्चेति फलितम् । साक्षात्कारश्च स्वाश्रयादेः संयुक्तसमवायजन्यत्वेन लौकिकत्वेन वा विशेषणीयः, तेन प्रामाण्यविषयकोपनीतमानमादाय न बाधः । तत्प्रामाण्यग्रहप्रतिबन्धकासमवहितत्वेन साक्षात्कारो विशेषणीयः, तेनेदं निष्प्रकारकं इत्यादिलौकिकप्रत्यक्षमादाय न बाधः । अनुव्यवसीयमानज्ञानप्रामाण्यमेव पक्षः, नातो बाधः । प्रकारता च ज्ञानत्वावच्छिन्नविशेष्यतानिरूपितत्वविशिष्टप्रामाण्यत्वावच्छिन्नप्रकारता-घटत्वादिनिष्ठप्रकारतानिरूपितप्रकारतयोरन्यतरप्रकारतारूपा ग्राह्या । अन्यथा प्रमात्वकालीनत्वादिविषयकत्वेन कालिकादियत्किञ्चित्सम्बन्धेन प्रकारत्वत्वादियत्किञ्चिद्रूपेण वा प्रमात्वप्रकारकत्वेन बाधान्तरापत्तेः । घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वस्य केवलघटत्वप्रकारकत्वानतिरिक्ततया सिद्धसाधनापत्तेश्च । न्यायनयेऽप्यनुव्यवसाये घटत्वप्रकारकत्वादिमानाभ्युपगमात् इदं ज्ञानं न वेति संशयोत्पत्त्या विधिकोटिनिराकरणानुपपत्तेश्च । यथा कथंचित् तत्सत्त्वेऽपि ताद्दशसंशयसम्भवात् । एवमग्रिमविप्रतिपत्तिष्वपि बोध्यमित्येव सारम् ।

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणिव्याख्याने प्रामाण्यवादे

॥ तृतीयविप्रतिपत्तिः ॥



## ॥ अथ चतुर्थविप्रतिपत्तिः ॥

**[म] स्वाश्रयेण गृह्यत एव न वेति प्रत्येकमेव वा ।**

[दी] न हि त्रिभिरेकदा विवाद इत्यभिप्रेत्याह (स्वाश्रयेणेति) रीतिरुक्तैव । इति—अनेन प्रकारेणैव, प्रत्येकं विप्रतिपत्तिर्बोध्या । मिश्रमते स्वाश्रयानुव्यवसायेन *

[ग] (न ह्येकदेति) तथा च मतत्रयसाधारणत्रिविधकोटिप्रयासोऽनर्थ इति भावः । नन्वत्र यावत्पदाभावात् प्रामाण्याश्रयप्रामाण्यानुमित्यादिमादाय सिद्धसाधनम्, यावत्त्वनिवेशे प्रामाण्यभानविरोधिदोषादिसमवहितस्वाश्रयेणाग्रहाद्बाध इत्यत आह (रीतिरुक्तैवेति)पूर्ववदेवकारबलादेव सामग्र्या यावत्त्वलाभः, प्रामाण्यग्रहप्रतिबन्धकासमवहितत्वविवक्षया च बाधः परिहरणीय इत्यर्थः । मिश्रमते भट्टमते च विप्रतिपत्तेरप्रदर्शनेन मूलस्य न्यूनता स्यादिति इति शब्दस्यैव तत्प्रदर्शकतामाह (इति-अनेन प्रकारेणैवेति) विशिष्य मिश्रादिमते विप्रतिपत्तिं स्वयं दर्शयति (मिश्रेति) (स्वाश्रयानुव्यवसायेनेति) ग्राह्यं न वेत्यग्रिमेणान्वयः । स्वाश्रयविषयकलौकिकप्रत्यक्षविषयो

---

* अत्र यद्यपि "स्वाश्रयग्राहकेण गृह्यत एव न वा" इति तृतीयविप्रतिपत्तिर्गुरुनयेन प्रथमतो मतत्रयसाधारणविप्रतिपत्तित्वेन व्याख्यातापि तदनन्तरं 'वस्तुत' इत्यादिना मिश्रमतमात्रसाधारणविप्रतिपत्तितया व्याख्याता । उक्त एव च "स्वाश्रयेण गृह्यत एव न वा" इति विप्रतिपत्तिर्गुरुमतमात्रसाधारणविप्रतिपत्तितया च व्याख्यायि । तथापि "स्वाश्रयग्राहकेण" इत्यादिविप्रतिपत्तिर्मतत्रयसाधारणविप्रतिपत्तिरित्येव दीधितिकृतामभिमतम् । अत एव मूले मिश्रमतमात्रसाधारणविप्रतिपत्तेरनभिधानात्स्वयमेव "मिश्रमते स्वाश्रयानुव्यवसायेन ग्राह्यत्वा तैर्ग्राह्य न वेति" इति उक्तमतमात्रसाधारणविप्रतिपत्तिं प्रादर्शयत् । व्याख्या तत्र गदाधरभट्टाचार्यैस्तथैव । एवञ्च तृतीयविप्रतिपत्तेर्मतत्रयसाधारणतया मतत्रयसाधारणविप्रतिपत्तौ वक्तव्यायाम् अवश्यं पूर्वमेव निरूपिततया तृतीयविप्रतिपत्तेरव्याख्यानमपि सङ्गतं भवतीत्यवधेयम् ।

इति- सं- (दक्.) ।

[दी] यावद्भिर्वा तैर्ग्राह्यं न वेति । शेषं पूर्ववत् । भट्टमते प्रामाण्याविषयक त्वेन भट्टमतसिद्ध यत्तद्भिन्नयावद्विषयो न वेति । विधेर्ज्ञानत्वादौ निषेधस्य च तत्प्रामाण्याघटकधर्मान्तरे प्रसिद्धिः ।

---

[ग] प्रामाण्यमुपादाय तद्भेदकूटसाधने बाधात् । परमते प्रामाण्यस्य स्वपदे नोपादानासम्भवाच्च । अप्रामाण्यादिमात्रोपदाने च सिद्धसाधनात् ।

यत्तु स्वाश्रयघटितसन्निकर्षप्रयोज्यविषयताकत्वं स्वाश्रयानुव्यवसाय ग्राह्यत्वमिति । तदसत्, न्यायमतेऽपि घटत्वप्रकारितात्वादिना प्रामाण्यस्य लौकिकसन्निकर्षाधीनभानविषयतया निषेधसाधने बाधात् । इत्यलं पल्लवितेन ।

(यावद्भिर्वा तैरिति) प्रामाण्यभानप्रतिबन्धकसमवधानानन्तरक्षणानुत्प न्नस्वाश्रयलौकिकप्रत्यक्षैर्यावद्भिर्ग्राह्यत्व वेत्यर्थः । उपदर्शितरीत्या सिद्धसाध नस्य वारणाय यावत्पदम् । प्रामाण्यविषयकज्ञानोपनीतभानाग्राह्यतया बाध वारणाय लौकिकत्वनिवेशनम् (शेषं पूर्ववदिति) प्रामाण्यभानप्रतिबन्धकसम वधानानन्तरक्षणानुत्पन्नत्व निवेश्याप्रामाण्यप्रमात्मकानुव्यवसायाग्राह्यत्वेन बाधो वारणीय इत्यर्थ (प्रामाण्याविषयकत्वेनेति) प्रामाण्यविषयकत्वेन भट्ट मतसिद्धयावद्ग्राह्यत्वस्य साध्यत्वे ज्ञातताल्लिङ्गकानुमितेर्नैयायिकासिद्धतया तन्मतसिद्धप्रामाण्यग्राहकमेव तन्मते यावदन्तर्गतम्, तथा च यावद्ग्राह्यत्वा भावसाधने बाध इत्यभावद्वयगर्भता । तदुपादाने भट्टमतासिद्धानुव्यवसायस्य यावदन्तर्गततया नाभावसाधने बाध ।

यद्यपि प्रामाण्यविषयकानुमितित्वेन भट्टमतसिद्धो न्यायमतेऽनुव्यव सायोऽपीति निषेधद्वयानुपादानेऽपि सामञ्जस्यम्, तथापि व्यवसायसन्नि- हितज्ञानपक्षे प्रामाण्यविषयकत्वानुमितित्वभ्रमरूपता न भट्टाभ्युपगम्या, अपि तूभयसिद्धकालान्तरीणानुमितौ, व्यवसायसन्निहितत्वभ्रमरूपतेत्यस्या पि सम्भवात्, तथा सति चानुव्यवसायस्योक्तरूपेणापि भट्टाभ्युपगतत्वा सम्भव इत्याशयेन निषेधद्वयनिवेशनम् (ज्ञानत्वेति) ज्ञानत्वघटितप्रामाण्यमेव प्रामाण्याविषयकेति प्रामाण्यपदेन विवक्षितमित्याशयेन । याथार्थ्यमात्रविव-

**[म] यत्तु योगजधर्मसामान्यलक्षणप्रत्यासत्त्या स्वाश्रयप्रामाण्यं तेनैव गृह्यत इत्यंशतासिद्धसाधनमतो योगजधर्माद्यजन्यत्वं विशेषणमिति । तन्न, परं प्रत्यसिद्धेः ।**

---

[दी] ननु तद्विशेष्यकत्वादे प्रतिज्ञान भिन्नत्वात्तद्घटितप्रामाण्यस्यापि प्रतिज्ञान भेद, तथा च योगिज्ञानादिप्रामाण्य तेनैव गृह्यत इति पूर्वपक्षे केषाञ्चित्समाधान दूषयितुमुपन्यस्यति (यत्त्विति) "योगजधर्माजन्ये" ति "जन्ये" ति च

---

[ग] क्षणुपरेण प्रामाण्यघटकघटत्वादिपरमादिपदम् ; वस्तुमात्रस्यैव प्रामाण्यघटकतया तदिति विशेषणम् ।

न चैवमपि मेयत्वादिमतीत्यादिप्रामाण्य यत्र प्रकृत तत्र तद्घटकाप्रसिद्धिरिति वाच्यम्,–तादृशप्रामाण्यघटकप्रमेयव्यक्तीना भेदेन—तस्यापि भिन्नतया प्रत्येक तद्घटकस्य तत्र तत्प्रामाण्यविषयकयावद्विषयकत्वाभावस्य च प्रसिद्धे ॥

ननु योगिज्ञानादिवृत्तेर्घटत्ववतीत्यादिप्रामाण्यस्य तद्विषयकज्ञानान्तरेऽपि सत्त्वात् न यावत्स्वाश्रयग्राह्यत्वमिति सिद्धसाधनाप्रसक्त्या "यत्त्वि"त्यादिमूलासङ्गति ; न च सर्वविषयकयोगिज्ञानादिमात्रविषयतद्वृत्त्यादिरूपप्रकारघटितप्रामाण्ये सिद्धसाधनवारणपरतया तत्सङ्गतिरिति वाच्यम्,—प्रामाण्यत्वस्य सर्वप्रामाण्यसाधारणस्यैकस्याभावात् घटत्ववति घटत्वप्रकारकत्वत्वाद्येरेव पक्षतावच्छेदकत्वात्, योगजधर्माद्यजन्यत्वविशेषणस्याव्यावर्तकत्वादित्याशङ्क्य ज्ञानव्यक्तिभेदेन प्रामाण्यभेदं इति मतमाश्रित्य तत्सङ्गमयति (नन्वित्यादिना) (प्रतिज्ञान भिन्नत्वादिति) विशेष्यिता प्रकारितयो स्वरूपसम्बन्धात्मकत्वेन तज्ज्ञानस्वरूपत्वादिति भावः । ईश्वरज्ञानवृत्तिप्रामाण्ये तद्ग्राह्यांशेनासिद्धसाध्य योगजधर्माद्यजन्यत्वस्य ज्ञानविशेषणतयापि दुर्वारमतो जन्यत्वरूपविशेषणान्तरमपि पूरयति (जन्येति चेति) पक्षसङ्कोच विना साध्यघटकस्वाश्रये उक्तविशेषणप्रवेशे योगिज्ञानवृत्तिप्रामाण्यस्य तादृशविशेषणाक्रान्तस्वाश्रयाप्रसिद्ध्या साध्या

[म] प्रामाण्यमात्रपक्षत्वे प्रामाण्यं स्वाश्रयेण गृह्यत एवेत्युद्देश्यप्रतीतिरसिद्धेश्च नांशतस्सिद्धसाधनम् ॥

[दी] पक्षविशेषणं चोध्यम् । स्वयं दूषणमुद्धरति (प्रामाण्येति) तद्धद्विशेष्यकत्वादेरननुगतत्वमतेऽपि तद्धद्विशेष्यकत्वात्वादिना अनुगतेन पक्षत्वात्, पक्षतावच्छेदकावच्छेदेन च साध्यसिद्धेरुद्देश्यत्वाच्चांशतस्सिद्धसाधनमित्यर्थः । निषेधसिद्धेः पक्षतावच्छेदकसामानाधिकरण्यमात्रेणोद्देश्यत्वान्नांशतो बाधः ॥

[ग] प्रसिद्धिरिति मूलस्थविशेषणपदस्य पक्षप्रविष्टज्ञानविशेषणपरत्वं स्पष्टयति (पक्षविशेषणमिति) प्रामाण्यमात्रेत्यादिग्रन्थस्य परकीयसिद्धसाधनप्रसक्तिदूषणपरत्वस्य सम्यक्, सामानाधिकरण्यमात्रेण साध्यसाधनोद्देश्यतयापि तत्प्रसक्तेः तत्पक्षावलम्बनेनैव विशेषणदानसङ्गतेश्च, स्वयमपि पक्षतावच्छेदकैक्येऽप्यंशतस्सिद्धसाधनं दोष इति प्राचीनमतानुसारेण पक्षविशेषणस्यानेकत्रोपात्तत्वादित्यतः पक्षविशेषणमनुपादाय स्वीयपूर्वपक्षसमाधानपरतया तत्सङ्गमयति (स्वयमिति) दूषणं-सिद्धसाधनरूपम् । ज्ञानव्यक्तिभेदभिन्नघटत्ववतीत्यादीनामनुगमेन पृथक्पृथक् पक्षत्वे पक्षतावच्छेदकैक्याभावादवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतयापि न सिद्धसाधनपरिहारस्सम्भवतीत्याशङ्का परिहरति (तद्धदिति) (अनुगतेनेति) विशेष्यितादेः ज्ञानादिस्वरूपत्वेऽप्यनुगतप्रतीतिनिर्वाहाय विशेष्यितात्वादीनामनुगतानामतिरिक्तानामवश्योपगन्तव्यत्वादिति भावः । पक्षत्वात्—पक्षघटकत्वात् । पक्षतावच्छेदकैक्येऽपि तत्सामानाधिकरण्येन साध्यसिद्धावेकदेशसिद्धिर्विरोधिन्येवेत्यत आह (पक्षतावच्छेदकावच्छेदेनेति) नांशतस्सिद्धसाधनम्—दोष इति शेषः । ननु योगिज्ञानादिप्रामाण्यसाधारणरूपेण पक्षत्वे उक्तरीत्यांशतस्सिद्धसाधनस्यादोषत्वेऽपि निषेधसाधने तत्रांशतो बाधात्तदनुपपत्तिरित्यत आह (निषेधेति) नांशतो बाधः, दूषणमिति शेषः । किञ्चिज्ज्ञानप्रामाण्यस्य परतस्त्वसिद्धौ यादृशकारणविरहात्तत्र स्वतस्त्वम्, तादृशकारणविरहादन्यत्रापि योगजधर्माद्यजन्यज्ञाने प्रामाण्यस्य न स्वतो ग्रहण-

[घ] केचित्तु तद्वति तत्प्रकारकत्वस्य तत्तद्धर्मभेदेन भिन्नत्वात्, सर्वेषां विशिष्योपादानासम्भवात् प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वम्; तत्पदप्रवृत्तिनिमित्तञ्च लाघवात्तद्वति तत्प्रकारकत्वमेवेति मूल एव व्यक्तम्; तथा च सर्वविषयत्ववति सर्वविषयत्वप्रकारकत्वस्य स्ववृत्ते. योगिज्ञानेन ग्रहणादंशतस्सिद्धसाधनमित्याहुः ।

[ग] सम्भव इति सामानाधिकरण्यमात्रेण स्वतो ग्राह्यत्वाभावसाधनेऽपि नैयायिकाभिमतसिद्धिरिति भावः । मिथ्याणां समानाकारकनानाज्ञानप्रामाण्यैकपेऽप्यंशतस्सिद्धसाधनप्रसङ्गसङ्गमनप्रकारमुपन्यस्यति (केचित्त्विति) (सर्वेषां विशिष्योपादानासम्भवादिति) घटत्वपटत्वादिघटितानन्तप्रामाण्यानां घटत्ववति घटत्वप्रकारकत्वत्वादिना सर्वज्ञानासम्भवेन सर्वत्रैकदा स्वतस्त्वादिसाधनासम्भवादित्यर्थः । ननु प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वेऽनवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया स्वयमंशतस्सिद्धसाधनपरिहारस्य असङ्गतेः, विशेष्यावृत्त्यप्रकारकत्वादिरूपप्रामाण्ये स्वतो ग्राह्यत्वस्याशतो बाधादित्यारुच्य तस्य प्रमापदप्रवृत्तिनिमित्तत्वं निराकरोति (तत्पदप्रवृत्तिनिमित्तञ्चेति (मूल एवेति) " तद्वति तद्वैशिष्ट्यज्ञानत्वं वा प्रामाण्य" मित्याद्यभिमतचिन्तामणिग्रन्थ एवेत्यर्थः । योगिज्ञानेन — ज्ञानमिदं सर्वविषयकमित्यादियोगिज्ञानेनेत्यर्थः । ग्रहणात्—प्रामाण्यघटकसर्वान्तःपातित्वेन प्रकारतया विषयीकरणात् । प्राथ्वतायाः प्रकारतारूपत्वे सर्वत्ववति सर्वत्वप्रकारकत्वरूपप्रामाण्यस्य सर्वमित्याकारकस्वाश्रययावज्ज्ञानाप्रकारतया न सिद्धसाधनप्रसक्तिरिति सर्वविषयत्ववतीत्यादिप्रामाण्यानुसरणम् ।

अत्र च साध्ये स्वपदेन विशिष्य घटत्ववतीत्यादिकमेवोपादेयम्, न प्रमापदप्रवृत्तिनिमित्तत्वेन, तदाश्रययावद्ग्राह्यत्वस्य क्वचिदपि प्रामाण्येऽसत्त्वात्, तथा चैकदा सकलप्रामाण्ये साध्यसाधनासम्भव एतन्मतेऽप्यविशिष्टः, घटत्ववतीत्यादौ घटत्ववतीत्यादिप्रामाण्याश्रययावद्ग्राह्यत्वासत्त्वेनांशतो बाधश्च दुष्परिहारः; यत्किञ्चित्स्वाश्रयग्राह्यं यत्तत्त्वं तत्तद्भेदकूटस्य सर्वसाधारणानुगतस्य साध्यत्वे च तादृशत्वपदेनाप्रामाण्यादिमात्रोपादाने सिद्धसाधनम्, प्रामाण्यस्याप्युपादाने बाध इत्यादिकमन्वर

[ग] सवीजम् । न च स्वयमपि घटत्ववतीत्यादिप्रामाण्यस्य ज्ञानव्यक्तिभेदेन भेदमुपगम्य योगजधर्माजन्यत्वविशेषणेन परेषां सिद्धसाधनवारणस्य, घटत्ववतीत्यादिप्रामाण्यस्य अननुगतत्वमुपगम्य च पक्षतावच्छेदकैक्यनिर्वाहेण मणिकाराणां तद्वारणस्य च सङ्गमितत्वादुक्तानुपपत्तिस्तुल्यैव, साध्ये घटत्ववतीत्यादेरनुगतरूपेण निवेशे तदाश्रययावद्माष्ठत्वस्य प्रत्येकं सर्वत्र प्रामाण्यव्यक्तौ बाधात्, तत्तद्व्यक्तित्वेन निवेशेऽप्यंशतो बाधस्य दुष्परिहरत्वादिति वाच्यम्;—स्ववृत्तित्वमात्रत्वोभयसम्बन्धेन ज्ञानवत्त्वस्य साध्यतया बाधानवकाशात् । ज्ञानव्यक्तिभेदेन भेदमनभ्युपगच्छतां मिश्राणां मते उक्तसाध्योपगमे यत्किञ्चित्त्वाश्रयमात्रतया सिद्धसाधनस्य दुर्वारत्वात् ।

इति श्रीमहामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचिते
प्रामाण्यवादे

॥ चतुर्थी विप्रतिपत्तिः ॥



## ॥ अथ पञ्चमी विप्रतिपत्तिः ॥



### ॥ चिन्तामणिः ॥

यद्वा घटोऽयमिति ज्ञानप्रामाण्यं एतज्ज्ञानग्राह्यं न वा, एतज्ज्ञानग्राहकमात्रग्राह्यं न वेति ।

### ॥ मथुरानाथीयम् ॥

* नन्विदमयुक्तम्—यदि ज्ञानव्यक्तिभेदेन प्रामाण्यभेदः तदा साध्ये स्वपदस्य तत्तत्प्रामाण्यव्यक्तिपरत्वे कस्यापि साध्यस्य पक्षतावच्छेदकावच्छेदेनावृत्तेरंशतो बाधापत्तेः, सामान्यतो घटत्ववति घटत्वप्रकारकत्वादिपरतायां तद्ग्राह्यविषयकयावत्प्रत्यक्षविषयत्वस्य कुत्राप्यभावाद्बाधापत्तिरित्यस्वरसादाह (यद्वेति) (घटोऽयमितीति) (ज्ञानप्रामाण्यमिति) एतज्ज्ञानवृत्तिप्रामाण्यमित्यर्थः। (एतज्ज्ञानग्राहकमात्रेति) मात्रपदं कृत्स्नार्थकम्, तथा चैतज्ज्ञानविषयकयावल्लौकिकप्रत्यक्षप्रकारो न वेत्यर्थः । व्याख्याततत्त्वमेतत् ।

इति श्रीमथुरानाथ तर्कवागीशविरचिते

तत्त्वचिन्तामणिव्याख्याने

प्रामाण्यवादे

॥ पञ्चमीविप्रतिपत्तिः ॥



* अत्र च शिरोमणिरघुनाथभट्टाभ्यामस्या विप्रतिपत्तेरव्याख्यानान्मथुरानाथीयमेवानुबद्धमिति ज्ञेयम् ।

[म] तत्र यद्यपि विशेष्यावृत्त्यप्रकारकत्वमगृहीतग्राहित्वं वा, सर्वधीयथार्थत्वपक्षेऽनुभवत्वजातेरभावेन स्मरणान्य-ज्ञानत्वं विशिष्टज्ञानत्वं वा प्रामाण्यं स्वस्य न तेनैव न वा अनुव्यवसायेन ग्रहणयोग्यम्; विशेष्यावृत्त्यप्रकारक-त्वादेर्विशेषणस्य प्रागनुपस्थितौ तद्वैशिष्ट्यस्य ज्ञातुमश-क्यत्वात् ।

[दी] विशिष्टज्ञानत्वम्–अगृहीतासंसर्गकधर्मधर्मिविषयैकज्ञानत्वम् । प्राक्–पूर्वम् । अनुपस्थितौ–उपस्थितेस्तत्सामग्र्या वा विरहे ।

[ग] ननु–"विशिष्टज्ञानत्वं वा प्रामाण्यं स्वस्य न तेनैव न वाऽनुव्यवसाये-न" त्यादिमूलमसङ्गतम्, विशिष्टज्ञानत्वस्य सप्रकारकज्ञानत्वरूपस्य वैशि-ष्ट्यविषयकज्ञानत्वरूपस्य वा ज्ञानग्राहकसामग्र्या ग्रहे बाधकाभावात्, पुरोवर्तिनि घटत्वप्रकारकत्वादेर्न्यायमतेऽप्यनुव्यवसायेन ग्रहणादित्याशङ्का निरसितुं विशिष्टज्ञानत्वं व्याचष्टे (विशिष्टज्ञानत्वमिति) तत्र तद्विशिष्टज्ञान-त्वमित्यर्थः । (अगृहीतासंसर्गकेति) तत्र धर्मिण्यगृहीतोऽगृह्यमाणः संसर्गो यस्य धर्मस्य, तद्धर्मिविषयकत्वे सति तद्धर्मविषयकज्ञानत्वमित्यर्थः । नायं घट इति यथार्थज्ञानस्य घटादिरूपधर्मिणि घटत्वादिविशिष्टबुद्धित्ववारणा-याऽसंसर्गाग्रहनिवेशः । धर्मधर्मिभ्यां प्रत्येकमन्वितस्य विषयताद्वयस्य पृथक् पृथक् ज्ञानयोरप्यन्वयः सम्भवति, तथा सति ज्ञानद्वयमपि धर्मधर्मि-गोचरज्ञानत्वेनेन लभ्यते, अत एकपदं धर्मधर्मिविषयकत्वयोस्सामानाधि-करण्यलाभसम्पादकस्य एकस्मिन् ज्ञाने उभयान्वयतात्पर्यस्य लाभाय । प्राक्पदेनोपस्थितपदस्य समासे घटानधिकरणमित्यादौ घटाधिकरणभेदादि-धन् पूर्वकालीनोपस्थितेर्विग्रहः प्रत्येतु शक्यते, न च [illegible] विवक्षितः, किन्तु-पस्थितिरूपकारणाभावे पूर्वकालीनत्वमेव, तादृशस्यैव कारणाभावस्योत्तर-काले कार्याभावनिर्वाहकत्वात्, अतोऽसमासं स्फुटयति (प्राक् पूर्वमिति) "विशेषणस्य प्रागनुपस्थितौ तद्वैशिष्ट्यस्य ज्ञातुमशक्यत्वात्" इति मूल-ग्रन्थेनाभिधानं विशेषणज्ञाने तुनानजीकर्तृमीमांसकमते प्रामाण्यस्य न स्वतो ग्राह्यत्वमित्युपस्थितिविषयं न्यायमते यथाश्रुतार्थकतया, परमते तस्याप्-

[म] नापि ज्ञानातीन्द्रियत्वे ज्ञानानुमित्या तद्गृह्यते, ज्ञानमात्रलिङ्गस्य प्राकट्यादेस्तद्व्यभिचारात् । नापि प्रमाहितज्ञातताविशेषात्, तस्य प्रथमं दुर्निरूपत्वात् । अन्यथा अप्रमाहितज्ञाततया अप्रामाण्यस्यापि स्वतो ग्रहापत्तिरिति ।

---

[दी] प्रमाहितत्वमेव विशेषः, प्रमाजन्यतावच्छेदकं ज्ञाततात्वव्याप्यान्तरवैजात्यं वा? आद्ये (तस्येति) अन्त्ये प्रमया विजातीया ज्ञाततेवाऽप्रमयापि विजातीया सा जनयितव्या, तथा च ततोऽप्रामाण्यस्यापि स्वतो ग्रहापत्तिरित्याह (अन्यथेति) वैशिष्ट्यं धर्मधर्मिभावो न तु समवायः, भेदेन तस्य

---

[ग] मीपरत्तया व्याकुरुते (अनुपस्थिताविति) "तस्य प्रथमं दुर्निरूपत्वा" दिति मूले तस्यपदस्य प्रमाजन्यज्ञाततानिष्ठवैजात्यपरत्वे ज्ञातताल्वस्येव तद्रूपापत्यैव जात्यस्यापि प्रथमं प्रत्यक्षेण सुग्रहतया "दुर्निरूपत्वा" दित्यसङ्गतम्, प्रमाहितत्वपरत्वे प्रमात्वघटिततया प्रथमं दुर्निरूपत्वोपपत्तावपि प्रथमं तस्य सुग्रहत्वाभावात्तस्य सुग्रहत्व इत्यर्थकस्याग्रिमस्य "अन्यथे" त्यस्यासङ्गतिः, अतो विशेषं वितर्क्य उभयं सङ्गमयति (प्रमाहितत्वमेवेत्यादिना) विशेषः-प्रमात्वविशिष्टानुमापकतावच्छेदकोऽप्रमाहितज्ञाततान्यावृत्तो धर्मः । प्रमात्वविशिष्टानुमापकतावच्छेदकवैजात्यरूपविशेषस्य सुग्रहत्वस्य अन्यथेत्यस्यार्थस्याप्रमाहितज्ञाततयाऽप्रमात्वस्य स्वतो ग्रहणानापादकतया अन्यथेत्याद्यसङ्गतिमाशङ्क्य, प्रमाजन्यतावच्छेदकजातिविशेषस्वीकारस्य तुल्ययुक्त्याऽप्रमाजन्यतावच्छेदकजातिप्रसञ्जकतयाऽप्रामाण्यस्य स्वतो ग्राह्यत्वप्रसञ्जकत्वं दर्शयति (प्रमयेति) एवञ्चाप्रमाजन्यतावच्छेदकमिव प्रमाजन्यतावच्छेदकमपि ज्ञाततानिष्ठं वैजात्यं अनुपलम्भबाधितमिति मूलाशयः । घटत्वादिवैशिष्ट्यस्य तत्सामानाधिकरण्यरूपत्वे तदवगाहित्वघटितं प्रामाण्यं न गुरुभट्टयोरनुमतमिति स्वयं वक्ष्यमाणतया वैशिष्ट्यं व्याचष्टे (वैशिष्ट्यमिति) धर्मधर्मिभावः— धर्मत्वं धर्मित्वं च, तच्च तयोरपि विशिष्टबुद्धिविषयतयानुमतमिति न समवायपक्षकवक्ष्यमाणदोषावसर इति भावः । तस्य— समवायस्य, अनभ्युपगमादित्यनेनान्वयः ।

[म] तथापि तद्वति तत्प्रकारकज्ञानत्वं तद्वति तद्वैशिष्ट्य-ज्ञानत्वं वा प्रामाण्यम्, तन्निश्चयादेव निष्कम्पव्यवहारात्, लाघवात्। नान्यद्गौरवात्। तच्च ज्ञानग्राहकसामग्रीग्राह्यमेव। तथा हि–विशेष्ये तद्धर्मवत्त्वं च व्यवसायस्यानुव्यवसाये नानुमित्या स्वप्रकाशेन वा गृह्यते, विषयनिरूप्यं हि ज्ञानम्, अतो ज्ञानवित्तिवेद्यो विषय इति व्यवसाये भासमाने धर्मे

[दी] गुरुणा तदैन्द्रियकत्वस्यानभ्युपगमात्। अनुव्यवसायमात्रता व्युत्पा-दयति (विषयनिरूप्यमिति) निरूपण–साक्षात्कारः। एवं वित्तिरपि। ननु विषयनिरूप्यत्वेऽपि यावद्विषयनिरूप्यत्वासिद्धौ न वैशिष्ट्यविषयतां-

[ग] (तदैन्द्रियकत्वानभ्युपगमादिति) तथा च तदवगाहित्वं प्रत्यक्षमप्रमायामस म्भवीति भावः। धर्मधर्मिभावश्च न्यायमतेऽपि सम्बन्धप्रतियोगित्वानुयोगित्व-रूपो विशिष्टबुद्धिविषय इत्यवधेयम्। "विषयनिरूप्य हीं" त्यादिना विषय ग्रहाधीनतया ज्ञानसाक्षात्कारे विषयभानं व्यवस्थापितम्, तावता ज्ञाततालिङ्ग-कानुमितौ न विषयमानव्यवस्थिति, न वा स्वप्रकाशरूपज्ञानप्रत्यक्षे, तस्य विष यग्रहजनकत्वजन्यत्वेन तादृशव्याप्तिनिपयत्वाभावात्, अतो मिश्रमतपरतया तद्व्याचष्टे (अनुव्यवसायेति) 'विषयनिरूप्य' मित्यत्र निरूपणस्य ज्ञानवित्ती स्यत वित्तेश्च ज्ञानसामान्यरूपत्वे विषयग्रहार्थं नज्ञानविषयो ज्ञानत्वव्यापक-विषयताको विषय इति 'विषये' त्यादिमूलार्थ। तथा च–यदनिरूप्य यो यज्ज्ञानजनकज्ञानविषय स तज्ज्ञानत्वव्यापकविषयताक इत्येव व्याप्ति-मूलाभिमेता, सा च नोपपद्यते, वह्न्याद्यनुमितिजनकज्ञानविषयधूमादेर्वह्न्या द्यनुमितौ, शाब्दबोधजनकज्ञानविषयाकाङ्क्षादेश्च शाब्दबोधे भानानियमात्, तदीययावज्ज्ञानजनकत्वनिवेशे चासिद्धि, ज्ञानाद्यनुमित्यादौ विषय-ज्ञानस्याहेतुत्वात् अतो व्याचष्टे (निरूपणमिति) तथा च–यद्विषयकलौकिक प्रत्यक्षजनकज्ञानविषयो य स तद्विषयकलौकिकप्रत्यक्षत्वव्यापकविषयताक इत्येव व्याप्तिलाभा[illegible]
पयघटादिरत्र दृष्टा [illegible]
पदार्थप्रत्यक्ष प्रति [illegible] सामान्यतो हतु-

**[मू] धर्मिवत्तद्वैशिष्ट्यमपि विषयः, व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्; सम्बन्धितावच्छेदकरूपवत्तया**

---

[दी] सिद्धिरत आह (व्यवसायेति) सामग्रीसत्त्वेन तस्यापि भानमित्यर्थः। नन्वेतावतापि समूहालम्बनसाधारणमनुव्यवसायस्य वैशिष्ट्यविषयकत्वं सिद्धम्, न तु तावतैव कृतकृत्यता, घटत्वप्रकारेण घटविषयतां विना घटे घटत्वप्रकारकमित्याकारकत्वानुपपत्तेरित्यतस्तथोपपादयति (सम्बन्धितेति) सम्बन्धितावच्छेदकं

---

[ग] वा, पटादिज्ञानात् घटाभावादिग्रहापत्तेः, नापि तत्तत्सम्बन्धिकप्रत्यक्षे तद्वद्विषयकज्ञानत्वेन, पटाभावत्वादिना घटाभावाद्यवगाहिभ्रमे व्यभिचारात्, अपि तु तत्तद्धर्मविशिष्टविशेषितत्तत्सम्बन्धिकप्रत्यक्षे तत्तद्धर्मविशिष्टज्ञानत्वेन, तथा च घटत्वादिविशिष्टविषयकज्ञानानुव्यवसायस्य घटत्वादिविशिष्टवैशिष्ट्यावगाहित्वासिद्धावेव तादृशप्रत्यक्षजनकतावच्छेदकविषयताकत्वरूपतादृशज्ञाननिरूपकत्वं तादृशज्ञानसाक्षात्कारत्वव्यापकविषयताकत्वसाधकलिङ्गं वैशिष्ट्ये सेद्धुमर्हति, तत्रैव च विवादेन वैशिष्ट्यरूपविषये तदसिद्धावित्यर्थः। प्रत्यासत्तिसत्त्वेऽपि कारणान्तरविरहेण सद्भूतो विषयस्याभानसम्भवात् प्रकृते ज्ञानप्रत्यासत्तिसत्त्व एव सकलतद्भासककारणसम्भवाद्वैशिष्ट्यभानं दुर्वारमिति मूलभावमाविष्करोति (सामग्रीति)

न च—तत्संसर्गकस्यापि ज्ञानस्य तदुपनायकत्वे तत्संसर्गकज्ञानात्तत्संसर्गकमिव तत्प्रकारकं तद्विशेष्यकं च ज्ञानं स्यादिति वाच्यम्,—इष्टत्वात्। तस्य–वैशिष्ट्यस्य। एतावतापि–सामग्रीबलेनापि (समूहालम्बनेति) घटत्ववैशिष्ट्यं पुरोवर्तिविषयकं ज्ञानमित्यादिबोधेत्यर्थः (सिद्धमिति) घटत्वादिविशिष्टघटादिविषयतापर्यन्तस्य उपनायकज्ञानजन्यतावच्छेदकत्वादिति भावः। घटत्वादिना यत्किञ्चिद्घटादिमात्रविषयकज्ञाने घटत्वादेस्तद्विषयत्वरूपतत्सम्बन्धितायाः अतिरिक्तवृत्तितया तत्सम्बन्धितावच्छेदकत्वं न सम्भवतीत्याशङ्क्य ज्ञानविषयतावच्छेदकत्वं प्रकारतारूपमतिप्रसक्तावपि सम्भवतीत्याह (सम्बन्धिनेति) व्यवसायरूपवर्तमानज्ञानमादायापि ज्ञायमाने

[म] ज्ञायमाने सम्बन्धिनि ससम्बन्धिकपदार्थनिरूपणमिति अनुव्यवसायस्य रजतत्वावच्छिन्नत्वेन पुरोवर्तिविषयत्वाच्च । अन्यथा पुरोवर्तिनं रजतं च जानामीति तदाकारःस्यात्, न तु रजतत्वेन पुरोवर्तिनमिति ।

[दी] सम्बन्धिनि विशेषणम् । ज्ञायमाने—विषयीक्रियमाणे । निरूपणम्—साक्षात्कारः । अन्यथा—वस्तुतः पुरोवर्तिरजतविषयता स्यात्, न तु रजतत्वविशिष्टपुरोवर्तिविषयतेत्यर्थः ।

[प्र] सम्बन्धिनीत्यादिनियमनिर्वाहाच्च प्रकृतसिद्धिरित्यतो व्याचष्टे (ज्ञायमान इति) (विषयीक्रियमाण इति) स्वेन ससम्बन्धिकविशेषणतयेत्यादिः । तेन व्यवसायविषयीकरणेन अयं घटो घटत्वप्रकारकं च ज्ञानमिति समूहालम्बनसिद्ध्या च न चरितार्थता । अनुमित्यादावनुव्यवसायप्रसङ्गात्—(निरूपणं—साक्षात्कार इति) लौकिकप्रत्यक्षमित्यर्थः । ईदृशनियमस्याप्रयोजकतानिराकरणपरे "अन्यथे" त्यादिग्रन्थे "पुरोवर्तिनं रजतं च जानामीति तदाकारस्स्या" दिति न सङ्गच्छते, तादृशप्रत्यक्षे सम्बन्धितावच्छेदकरजतत्वादिना सम्बन्धिनो भानादतस्तद्व्याचष्टे— (अन्यथेति) (पुरोवर्तिरजतविषयता स्यादिति) पुरोवर्तिस्वरजतत्ववैशिष्ट्यधर्मिज्ञानानां विशकलितानां ज्ञानप्रत्यक्षादौ भानं स्यादित्यर्थः । (न तु रजतत्वविशिष्टपुरोवर्तिविषयतेति) न रजतत्वेन पुरोवर्तिनं जानामीत्याकारकताप्रयोजकविशिष्टविषयतेत्यर्थः । तदाकारे ज्ञाने धर्मिणि तृतीयार्थरजतत्वादिवैशिष्ट्यस्यावश्यम्भानादित्यभिमानः ।

ननु—ज्ञानादिप्रत्यक्षस्य विषयांशे निर्विकल्पकत्ववारणाय धर्मितावच्छेदकीभूतेदन्त्वादिप्रकारेणैव विशेष्यमानमुपेयम्, न तु रजतत्वादिप्रकारेणापि, रजतत्वेनेदं जानामीति बुद्धौ ज्ञानांशे भासमानप्रकारिताया एव तृतीयार्थत्वादिति रजतत्ववत्तात्यादिप्रामाण्यभानासिद्धिः ;

[दी] वस्तुतस्तु—येन रूपेण यस्योपनयस्तेनैव रूपेण तस्योपनीतभानम्, अत एव जातित्वेन गोत्वस्योपस्थितावपि जातिमानित्येव भानम्, न तु गौरितीति ध्येयम्।

---

[ग] न च—इदन्त्वादिरूपधर्मितावच्छेदकवैशिष्ट्यस्येव रजतत्वादिरूपप्रकार-वैशिष्ट्यस्यापि विशेष्यिताविशेषणताख्यविषयतायां सामग्रीबलात् भाने बाधकाभावः, रजतत्वादेर्यत्र धर्मितावच्छेदकता तत्र तथा तद्भानस्यावश्यकतया तत्स्थलीयविशेषणज्ञानादिघटितसामग्र्याः प्रकृतेऽप्यविशिष्टत्वादिति वाच्यम्,—तत्र तद्धर्मितावच्छेदककव्यवसायस्यापि हेतुतया तदभावात्तत्र तत्स्थलीयसामग्र्यभावात्;

न च—तादृशव्यवसायस्य तथात्वेन हेतुत्वमप्रामाणिकम्, तद्धर्मावच्छिन्नविशेष्यताकस्येव तादृशस्यापि तद्धर्मप्रकारकज्ञानस्य तद्धर्मावच्छिन्नविशेष्यताकत्वेन प्रत्यक्षवारणाय विशेष्यतासम्बन्धेन तत्प्रकारकप्रत्यक्षे तादात्म्यसम्बन्धेन तादृशव्यवसायस्य विशिष्य हेतुताया आवश्यकत्वात्; तदवच्छिन्नविशेष्यताकत्वभानस्थल एव च तद्धर्मविशेष्यताकत्वभानोपगमेन तज्ज्ञानेऽपि तादृशव्यवसायापेक्षणात्; घट इत्यादिव्यवसायस्य घटत्वप्रकारकत्वेनैव भानमुपेयते, न तु धर्मिविशेष्यताकत्वेनापीति न तस्य विशेषणानवच्छिन्नधर्मिविषयताप्रसङ्ग इत्युपदर्शितप्रामाण्यग्रहयुक्तेरकिञ्चित्करतया स्वयं विशेष्यिताविशेषणतया इदन्त्वादिना भासमाने धर्मिणि रजतत्वादि-वैशिष्ट्यस्यापि भाने युक्त्यन्तरमाह (वस्तुतस्त्विति) (येन रूपेण यस्योपनय इति) येन रूपेण यस्योपनायकज्ञाने भानमित्यर्थः। उपनायकज्ञाने यदंशे यः प्रकार इति यावत्। (तेनैव रूपेण तस्योपनीतभानमिति) तस्योपनीत-भानं तत्प्रकारकमेवेत्यर्थः। तद्रूपं तदुपनीतभाने तदंशे प्रकार इति यावत्। तथा चायं घट इत्यादिज्ञानानुव्यवसाये विशेष्यिताप्रतियोगितया उपनीत-मर्यादया भासमाने धर्मिणि घटत्वादेः प्रकारत्वमावश्यकमिति भावः। उक्त-नियमे युक्तिमाह (अत एवेति)

[दी] तदेव मिश्रमतेनैवाय ग्रन्थ , अत एव–" अत एवे "त्यादिकमपि सङ्गच्छते ।

---

[ग] न च–यत्रोपस्थितजातित्वभाने बाधकाभावाज्जातिमानित्येव भानम्, प्रकृते च व्यवसायविशेषरूपकारणाभावरूपबाधकप्रयुक्तमेवेति वाच्यम्, जातित्वभानेऽपि जातिमान् गौरिति द्विविधविषयताशालिबोधोत्पत्त्या स्वरूपतो गोत्वानुपस्थितिदशाया तादृशबोधानुत्पाद एव कथितनियमावष्टम्भाभिधानात् ।

न च–तथा तादृशबोधोत्पत्तावपि कथितनियमाभङ्गेन उपष्टम्भासङ्गतिरेव, फलीभूतज्ञानीयोपनीतवस्तुविषयताया उपनायकज्ञानविषयतावच्छेदकधर्मावच्छिन्नत्वनियमस्य च जातित्वेन स्वरूपतश्च गोत्वोपस्थितिजन्यदर्शिताकारगोत्वोपनीतभानीयानवच्छिन्नविषयताया जातित्वानवच्छिन्नत्वासत्त्वेनासम्भवादिति वाच्यम्,—यद्धर्मप्रकारकयदीयविषयताशालिज्ञानाधीना येपनीततद्विषयता सा तद्धर्मप्रकारिकेत्यादिनियमस्योपगन्तव्यत्वात् । ईदृशश्च नियमस्तद्धर्मानवच्छिन्नतद्विषयताकोपनीतभाने तद्धर्मावच्छिन्नतद्विषयताकज्ञानत्वेन हेतुतयोपपादनीय ।

न च–स्वरूपतस्तत्प्रकारकबुद्धौ स्वरूपतस्तद्विशेषणावगाहिज्ञानस्य फलतो हेतुत्वेनोक्तनियमप्रकारणसम्भवे उपनीतभानस्थलीयोक्तनियमनिर्वाहकरकारणताकल्पनमयुक्तमिति वाच्यम्,—मीमांसके विशिष्टबुद्धौ विशेषणज्ञानकारणतानुपगमात् ।

न च–तथाप्युक्तकार्यकारणभावमुपेक्ष्य लाघवेनोक्तभानस्थल एव स्वरूपतस्तद्विषयकोपनीतभाने स्वरूपतस्तद्विषयकज्ञानस्य हेतुत्वकल्पनमुचितम्, तावता च न प्रकृतनिराश इति वाच्यम्,—एतदभिप्रायेणैव सिद्धान्ते स्वत प्रामाण्यग्रहस्य खण्डनीयत्वात् । इदानीमपततो दर्शितनियमावलम्बनेन स्वतस्त्वग्रहव्यवस्थापनात् । अत एव तादृशग्रन्थस्य गुरुमतपरत्वाभावान्न (अत एवेत्यादिकमपीति) तेन प्रथम भ्रमानुव्यवसायस्य शुक्त्यादौ धर्मिणि रजतत्वादिवैशिष्ट्यावगाहितया अपि सम्पन्नेन

[दी] अभ्युपेत्य तु मतत्रयसाधारण्येन व्याख्यायते (विषयेत्यादि) प्रकृतिर्के हि ज्ञाननिरूपणं स्वप्रकाशमर्यादया अन्यथा वा जायमानं तद्विषयमविषयीकृत्यासम्भवद्विषयान्तरवदविशेषाद्विशिष्टमपि विषयीकरोति ।

---

[ग] रजतत्वादिना भासमानधर्मिविशेष्यकत्वावच्छेदेन तत्प्रकारकत्वावगाहितया उपपादितत्वात् मिश्रमत एव च तत्सम्भवादिति भावः । "निरूप्यं ही" त्यस्य ग्रन्थस्य मतत्रयसाधारण्ये विषयग्रहाधीनसाक्षात्कारत्वरूपपूर्वोपदर्शितविषयनिरूप्यत्वार्थकता न सम्भवति, गुरुमते ज्ञानप्रत्यक्षस्य व्यवसायरूपविषयग्रहरूपतया तदजन्यत्वात्, भट्टमते ज्ञानस्यातीन्द्रियत्वेन तत्साक्षात्काराप्रसिद्धेरिति विषयाविषयकज्ञानाविषयत्वमेव विषयनिरूप्यत्वं मिश्रैर्व्याख्यातम्, तत्र ज्ञानपदस्य ज्ञानसामान्यार्थकता न सम्भवति, ज्ञानस्य स्वविषयाविषयकशाब्दादिज्ञानविषयत्वादिति ज्ञानपदं ज्ञानवर्तमानताधीनप्रकृतज्ञानविषयताकज्ञानपरं वाच्यम्, भट्टमते विषयोपरक्तज्ञानविषयता ज्ञाततालिङ्गकानुमितौ ज्ञानवर्तमानताधीनैवेति व्युत्पादितम्, एवं च स्वविषयाविषयकतादृशज्ञानाप्रसिद्ध्या तद्विषयत्वरूपस्थविषयकतादृशज्ञानत्वव्यापकविषयविषयताकत्वसाधकहेतुत्वप्रसिद्धिः, स्वविषयाविषयकज्ञानावृत्तिज्ञानवर्तमानताधीनस्वविषयताकत्वस्य हेतुत्वेऽपि तादृशस्वविषयताव्यापकस्वविषयताकत्वरूपसाध्यप्रसिद्धौव कृतकृत्यतया उक्तहेतुना तदनुमानमयुक्तम्, भट्टमते विषयोपहित ज्ञानस्य ज्ञातताலिङ्गकानुमितिविषयत्वासिद्धावेव ज्ञानविषयतायाः ज्ञानवर्तमानताधीनतासिद्ध्या तदधीनविषयताघटितहेतोर्ज्ञाने प्रसिद्धिः, तत्साधकं चोक्तानुमानमेवेत्यन्योन्याश्रयश्चेति तादृशग्रन्थमन्यथा व्याचष्टे (प्राकृतिकमिति) सामग्रीविशेषस्वभावाद्विशेष्यावगाहीत्यर्थः । अन्यथा—अनुव्यवसायादिरूपतया । (विषयमविषयीकृत्यासम्भवदिति) विषयावगाहनं विनासम्भवज्ज्ञानविषयताकमित्यर्थः । विषयाविषयकत्वप्रसञ्जितज्ञानविषयकत्वाभावमिति यावत् । प्रकृतज्ञाने च विषयानुपहितज्ञानभानप्रयोजकसाम-

[दी] अविशेष व्युत्पादयति (व्यवसायेति) मिश्रमते ज्ञानलक्षणाप्रत्यासत्ते-स्तुल्यत्वादित्यर्थः।

गुरुनये व्यवसायस्वरूपे जनयितव्ये या प्रत्यासत्तिस्तस्यास्तुल्यत्वात्— घटघटत्वाभ्यामिव धर्मधर्मिभावेनापि सम सत्त्वादित्यर्थः। भट्टनये व्यवसायस्वरूपे व्यवसायनिरूपके वा घटघटत्वादौ या प्रत्यासत्तिस्तज्ज्ञा-

[ग] अजन्यत्वे सति विषयाविषयकत्व ज्ञानविषयकत्वाभावापादकम्। एवं च विषयविषयकत्वसाधकतर्कप्रदर्शकं मूलमिति भावः। असम्भवदित्यन्त 'विषयनिरूप्य हि ज्ञान' मित्यस्य व्याख्या। अनुव्यवसायत्वेनाभिमते ज्ञाने नैयायिकानामपि वैशिष्ट्यातिरिक्तविषयभानस्य निर्विवादतया युक्तिपुरस्सरमपि ज्ञानवित्तौ विषयवेदनकथन न प्राधान्येन तत्परम्, अपि तु तद्धर्मधर्मिविषयकत्वस्य दृष्टान्तीकरणीयतया तत्राविवादलाभायैव तदभिधानमिति सूचयितुम्, अतो ज्ञानवित्तिवेद्यो विषय इत्येतन्नोपवर्णितम्। भेदे सत्येव दृष्टान्ततेति मूलोक्तधर्मधर्मिणोर्विषयान्तरत्वेनाभिधानम्। भासकसाम्यप्रविशेषेणैव दृष्टान्ततोपपद्यत इति तदविशेषरूपहेतु पूरयति (अविशेषादिति) सामान्यतो भासकसाम्यस्य हेतुत्वेनाभिधाने तद्विशेषाकाङ्क्षाया व्यवसायेत्यादिग्रन्थ योजयति (अविशेषमिति) व्यवसायस्य ज्ञानप्रत्यासत्तिविधया विषयभासकता गुरुभट्टमते नोपपद्यत इति तन्मते तादृशग्रन्थमन्यथा व्याख्यास्यमानो मिश्रमते तादृशयथाश्रुतार्थपरतामाह (मिश्रमत इति) व्यवसायस्वरूपे जनयितव्ये व्यवसायस्वरूपज्ञानार्थम्। या प्रत्यासत्तिः—यो विषयभासकश्चक्षुरादिलैकिकसन्निकर्षः। तुल्यत्वात्— साधारणत्वात्। तदेव विवृणोति (घटेति) गुरुमते समवायस्यातीन्द्रियतया वैशिष्ट्यपदे न तत्परम्, नातिरिक्तवैशिष्ट्यपर-भट्टनैव तदग्रकारादिति तस्य धर्मत्वधर्मित्वार्थकतामाह (धर्मेति) रूपपदस्य स्वरूपार्थकत्वे वैयर्थ्यात् अर्थान्तरासम्भव एव तदौचित्यमित्याशयेनाह (व्यवसायनिरूपकेति) अथवा—विषयतासम्बन्धेन प्रमासाध्यकज्ञाततालिङ्गक वक्ष्यमाणानुमाने ज्ञानभाननियामकज्ञाततासम्बन्धो व्यापकत्वम्, नासौ

[दी] मनियामकस्सम्बन्धस्तस्य वैशिष्ट्येऽपि तुल्यत्वादित्यर्थः । तथाहि— अयं घट इत्यादिप्राथमिकप्रत्यक्ष इव तज्जनितज्ञातताप्रत्यक्षेऽपि पुरोवर्तिनि घटत्वं भासते, तद्धेतोरिन्द्रियसन्निकर्षादेस्तदानीमपि सत्त्वात् ।

---

[गं] विषये, अपि तु व्यापकतावच्छेदकत्वरूपसम्बन्ध एवेति ज्ञातता-पक्षकप्रमाजन्यत्वसाध्यकानुमाने ज्ञानस्यापि व्यापकतावच्छेदकतया तद-भिप्रायेण (व्यवसायस्वरूप इति) विषयपक्षकानुमानाभिप्रायेण (व्य-वसायनिरूपक इति) जन्यतासम्बन्धस्य वृत्त्यनियामकतया व्यापक-त्वाघटकत्वेन जन्यताया एव साध्यत्वमित्यवधेयम् । सम्बन्धो ज्ञा-ततात्वस्य, तस्या वा लिङ्गस्य । स चाग्रे विशेषतो व्युत्पादयि-ष्यते । "व्यवसायरूपप्रत्यासत्ते" रित्यस्य विषयतारूपव्यवसायस-म्बन्धस्य वर्तमानज्ञानग्रहे विषयभानानियामकस्य तुल्यत्वादिति मिश्र-व्याख्यानं शुद्धेन ज्ञानत्वेन घटत्वप्रकारकज्ञानत्वेन वा व्यापक-ताज्ञानात् घटत्वविषयकत्वोपरक्तज्ञानानुमितिमभ्युपगच्छतां तेषामेव युज्यते, व्यापकतावच्छेदककोटिप्रविष्टस्य विषयस्य विधेयतावच्छेदकतया भाने वर्तमानव्यवसायविषयताया एव नियामकत्वस्य तद्वद्विषयकव्यवसायोपलक्षि-तकालविशेषस्य ज्ञाततालिङ्गकपरामर्शेन तद्वद्विषयोपहितज्ञानानुमितिजनने सहकारित्वमित्याशयेन तैरङ्गीकारात्; अनेन तु ज्ञाततालिङ्गकपरामर्शे तथा स्वभावस्य प्रथमविप्रतिपत्तौ दूषितत्वादन्यथा तादृशग्रन्थो व्याख्यायते । अत एव वैशिष्ट्यपर्यन्तस्य विषयस्य व्यापकतावच्छेदककोटिप्रविष्टत्वरूपो ज्ञाततात्वस्य ज्ञाततया वा सम्बन्धो घटत्ववैशिष्ट्यवद्धर्मिघटितप्रामाण्यप्र-कारेण ज्ञानस्य साध्यतायामेवोपपद्यते, तथा सति च व्यभिचारवारणाय ज्ञाततायां घटवृत्तित्वमपि हेतौ निवेशनीयमित्याशयेन तद्ग्रहोपायमाह (तथा हीत्यादिना) (तज्जनितज्ञातताप्रत्यक्षेऽपीति) तादृशप्रत्यक्षजनिताया ज्ञाततायाः घटघटितेन्द्रियसन्निकर्षजन्यते प्रत्यक्षेऽपीत्यर्थः । (तदानीमपि सत्त्वादिति) अन्यथा सन्निकर्षाभावेन ज्ञाततायाः एव प्रत्यक्षायोगादिति

[दी] अविशेष व्युत्पादयति (व्यवसायेति) मिश्रमते ज्ञानलक्षणाप्रत्यासत्ते-स्तुल्यत्वादित्यर्थः ।

गुरुनये व्यवसायस्वरूपे जनयितव्ये या प्रत्यासत्तिस्तस्यास्तुल्य-त्वात्— घटघटत्वाभ्यामिव धर्मधर्मिभावेनापि सम सत्त्वादित्यर्थ. । भट्टनये व्यवसायस्वरूपे व्यवसायनिरूपके या घटघटत्वादौ या प्रत्यासत्तिस्तज्ज्ञा-

---

[ग] अयजन्यत्वे सति विषयाविषयकत्व ज्ञानविषयकत्वाभावापादकम् । एव च विषयविषयकत्वसाधकतर्कप्रदर्शक मूलमिति भाव. । असम्भवादित्यन्त 'वि-षयनिरूप्य हि ज्ञान' मित्यस्य व्याख्या । अनुव्यवसायत्वेनाभिमते ज्ञाने नैयायिकानामपि वैशिष्ट्यानिरिक्तविषयभानस्य निर्विवादतया युक्तिपुरस्सर-मपि ज्ञानवित्तौ विषयवेदनकथन न प्राधान्येन तत्परम्, अपि तु तद्धर्म-धर्मिविषयकत्वस्य दृष्टान्तीकरणीयतया तत्राविवादलाभायैव तदभिधानमिति सूचयितुम्, अतो ज्ञानवित्तिवेद्यो विषय इत्येतन्नोपवर्णितम् । भेदे सत्येव दृष्टान्तताति मूलोक्तधर्मधर्मिणोर्विषयान्तरत्वेनाभिधानम् । भासकसाम्यस्य वि-शेषेणैव दृष्टान्ततोपपद्यत इति तद्विशेषरूपहेतु पूरयति (अविशेषादिति) सामान्यतो भासकसाम्यस्य हेतुत्वेनाभिधाने तद्विशेषाकाङ्क्षाया व्यवसाये-त्यादिग्रन्थ योजयति (अविशेषमिति) व्यवसायस्य ज्ञानप्रत्यासत्तिविधया विषयभासकता गुरुभट्टमते नोपपद्यत इति तन्मते तादृशग्रन्थमन्यथा व्या-ख्यास्यमानो मिश्रमते तादृशयथाश्रुतार्थपरतामाह (मिश्रमत इति) व्यवसायस्वरूपे जनयितव्ये व्यवसायस्वरूपज्ञानार्थम् । या प्रत्या सत्तिः—यो विषयभासकश्चक्षुरादीन्द्रियसन्निकर्षं । तुल्यत्वात्— साधारणत्वात् । तदेव विवृणोति (घटेति) गुरुमते समवायस्याती-न्द्रियतया वैशिष्ट्यपद न तत्परम्, नातिरिक्तवैशिष्ट्यपर–भट्टेनैव तदनङ्गी-कारादिति तस्य धर्मत्वधर्मित्वार्थकतामाह (धर्मेति) रूपपदस्य स्वरूपा-र्थकत्वे वैयर्थ्यात् अर्थान्तरासम्भव एव तदौचित्यमित्याशयेनाह (व्यव-सायनिरूपकेति) अथवा—विषयतासम्बन्धेन प्रमासाध्यकज्ञानतातिरिक्तक वक्ष्यमाणानुमाने ज्ञानभाननियामकज्ञानतासम्बन्धो व्यापकत्वम्, नासौ

[दी] अत एव अप्रमायामपि प्रमेत्येव गृह्यते, प्राथमिकभ्रमहेतोर्दोषस्य ज्ञानतापत्त्यवच्छेदकतायामपि सत्त्वात् । धर्मिणस्तदभाववत्त्वं न गृह्यते, तेनैव प्रतिबन्धात् । अतोऽप्रामाण्यग्राहकलिङ्गस्य तदभाववद्वृत्तितत्प्रकारकज्ञानत्वादेरग्रहात् स्वतस्त्वग्रहः ।

---

[ग] भावः । अत एव—भ्रमविषयपुरोवर्तिनि घटत्वग्रहसम्भवेन भ्रमजन्यघटत्वप्रकारकज्ञानतायामपि घटवृत्तित्वग्रहसम्भवात्तस्या अपि प्रमात्वाप्यनवच्छेदकरूपेण ग्रहादित्यर्थः । (प्रमेत्येवेति) क्वचित्प्रमेत्याकारकग्रहविषय इत्यर्थः । तादृशज्ञाने प्रमात्वघटकघटत्ववन्निष्ठता न भासते, अपि तु घटत्वेनावच्छेदकत्वेनैव वस्तुप्रामाण्यानवगाहनात् अप्रमायां प्रामाण्यं गृह्यत इति नोक्तम् । प्रत्यवच्छायाम्—प्रत्यक्षात्मकत्वहीनपूर्वकाले । क्वचित् सत्त्वात् । वर्तमानज्ञानग्राहकपरामर्शस्योक्तस्वभावानुगमे सत्तादीच्छादिलिङ्गकानुमितिविषयविलक्षणसामग्रीसत्त्वादेव प्रामाण्यभाने प्रामाण्यविषयकानुमितिसामग्रीसमवहितसामग्रीतोऽप्रामाण्यस्यापि सुग्रहतया तस्य न स्वतस्त्वम्, अपि तु प्रामाण्यस्यैवेति विशेषः कथमिति पक्षधरग्रन्थेनाक्षेप्तुमप्रामाण्यग्राहकलिङ्गदुर्ग्रहतामुपपादयति (धर्मिण इति) भ्रमविशेष्यस्याघटस्यापीत्यर्थः । तदभाववत्त्वम्—घटत्वाभाववत्त्वम् । तेनैव—दोषेणैव । (न स्वतस्त्वग्रह इति) तद्ग्रहस्याप्रामाण्यस्वतस्त्वप्रयोजकत्वात् इत्यर्थः । क्वचिद्दोषनाशवशाद्धर्मिण्यतद्भावग्रहेणाप्रामाण्यलिङ्गस्य ग्रहसम्भवेऽपि अप्रामाण्यग्रहे अप्रामाण्यप्रयोजकसामग्रीविघटकदोषनाशापेक्षया परतस्त्वम्, प्रामाण्यग्रहे च न स्वप्रयोजकसामग्रीबहिर्भूतापेक्षेति विशेषः ।

यद्यपि—न्यायमतसिद्धमनःसंयोगेच्छादिलिङ्गकानुमितिसमसत्तादिव ज्ञाततालिङ्गकानुमितिरिति तथा ग्रहोऽपि चेत् स्वतो गृह्यते तदा न्यायमतसिद्धतादृशानुमित्या ग्रहणे न तयोरुक्तरीतिर्विशेषो नोपपद्यत इति मिश्राणामाशयो दुरुद्धरः, तथापि—भट्टमते व्यवसायेन द्वितीयक्षणे ज्ञाततायां जनितायां तृतीयक्षणे घटत्वप्रकारकत्वेन तत्प्रत्यक्षे जायमाने घटवृत्ति

[म] अत एवाप्रमापि प्रमेत्येव गृह्यते, अनुव्यवसायस्य भ्रमविषयवैशिष्ट्यविषयत्वात् । न च न प्रामाण्यं प्रथमतो ज्ञातमिति न तदारोपः स्यादिति वाच्यम्,—प्रामाण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वेन ज्ञानवित्तिवेद्यत्वात्, अभाव प्रतीतौ प्रतियोगित्वाभावत्वयोरिव । तदभाववति तत्प्र–

[दी] महानियामको यत्सम्बन्ध सामान्यस्य विशेषस्य वा व्यापकतावच्छेदककोटिप्रविष्टत्वम्, तस्य वैशिष्ट्येऽप्यवैशिष्ट्यम् । एव घटो घटविशेष्यकघटत्वप्रकारकज्ञानविषय, घटवृत्तिघटत्वप्रकारकज्ञाततावत्त्वादिति प्रमात्वानुमितौ घटघटत्वविषयकत्वे यन्निमित्त व्यापकतावच्छेदककोटिप्रविष्टत्व तद्वैशिष्ट्येऽपीति ।

अभावत्वम्—भावव्यावृत्तो धर्मविशेष ।

[प] नुपपत्तिरेतन्मते दोष एव, अतीतानागतविषयकज्ञानेन ज्ञातताया एवाजननात् । असन्निकृष्टविषयकानुमित्यादिना ज्ञातताजननेऽपि तस्या प्रत्यक्षासम्भवात्, ज्ञानान्तरोपायाभावात् । लिङ्गज्ञानासम्भवेन ज्ञानमहानुपपत्तिवत् । सामान्यस्य—यत्त्वतत्त्वघटितसामान्यधर्मोपरक्तस्य । विशेषस्य—तादृशसामान्यधर्मानुपरक्तस्य । अस्य च प्रविष्टत्वमित्यनेनाभिसम्बन्ध । अवैशिष्ट्यं—तुल्यसत्त्वम् । ज्ञातताल्लिङ्गकज्ञानसाध्यकानुमितिपक्षेऽपि "व्यवसायरूपे" त्यस्य व्यवसायनिरूपकार्थतया व्याख्यामव लम्ब्य "व्यवसाये" त्यादिक योजयति (एवमिति) एतन्मतेऽपि कथित दिशा सामान्यव्याप्तिर्विशेषव्याप्तिर्वानुमितिप्रयोजिका स्वयमूह्या । द्रव्यादिप्रतियोग्यन्योन्याभावरूपमभावत्व लौकिकप्रत्यक्षायोग्य ज्ञानानुपनीत न भासितुमीष्टे, अतस्तस्याज्ञानप्रामाण्यभाने दृष्टान्ततानिरोध इत्याशङ्क्याह (अभावत्वमिति) (भावव्यावृत्त इति) प्रतियोगिनिरूपित इत्यर्थ । भावसाधारण्येऽपि प्रकृतसङ्गतेयथाश्रुतासङ्गते । प्रतियोगिनिरूपितत्व तु सम्बन्धनानिर्वाहकमिति 'स्वरूपसम्बन्धविशेष' इत्यत्रानुपद वक्ष्यमाणे तदभिधानोपयोग । घटो नास्तीति बुद्धौ प्रतियोगिन सम्बन्धेऽभावांशे

[म]: कारकज्ञानत्वमप्रामाण्यं परतो ज्ञायते, तदभाववत्त्वस्य भ्रमानुल्लिखितत्वेनानुव्यवसायाविषयत्वात् । न चैवमनुव्यवसायस्य यावद्व्यवसायविषयविषयकत्वे भ्रान्त-भ्रान्तिज्ञसङ्कर इति वाच्यम्,—

[दी] 'स च' स्वरूपसम्बन्धविशेषोऽखण्डोपाधिर्वेत्यन्यदेतत् । भ्रान्तम्—भ्रमः । भ्रान्तिज्ञम्—भ्रमविषयकं ज्ञानम् । सङ्करो भ्रमत्वेन । भ्रमज्ञानस्य भ्रमत्वापत्तिरित्यर्थः ।

[वि] सम्बन्धतयैव भासते न तु प्रकारतया, तस्य प्रकारत्वोपगमेऽपि तदननुगमाय तदंशेऽखण्डधर्मान्तरस्य प्रकारताया आवश्यकत्वेनाभावानुगमकाखण्डधर्मं स्वीकृत्य तस्यैवाभावांशे प्रकारतोपगम उचित इत्याशयेनाह (अखण्डोपाधिर्वेति), (अन्यदेतदिति) उभयथैवाज्ञातस्य प्रकारत्वासम्भवादिति भावः । न्यायमतेऽपि विशेषणधियस्तद्विशेषणभेदेन कारणताभेदादभावत्वादिविशिष्टबुद्धौ तज्ज्ञानस्य कारणत्वाकल्पनादनुपस्थितस्य तस्य प्रकारत्वोपपत्तिर्दुरुपा । भ्रान्तिज्ञपुरुषमात्रस्य परमते भ्रान्ततया अभेदरूपस्तदुभयसङ्कर इष्ट एवेत्यतो व्याचष्टे (भ्रान्तमित्यादि) (भ्रम इति) भ्रान्तपदस्य भावक्तान्तत्वादिति भावः । (भ्रमविषयकमिति) ज्ञाधातोर्विषयितार्थकत्वादिति भावः । भ्रमरूपस्य व्यवसायतदनुव्यवसाययोरभेदरूपसङ्करस्यापादकं दुर्घटमिति सादृश्यमेव सङ्करपदेन विवक्षणीयम्, तथा च ज्ञानत्वादिना सादृश्यस्य इष्टत्वात्तदघटकसादृश्यघटकधर्मं पूरयति (सङ्करो भ्रमत्वेनेति) तथा च भ्रमत्वापत्तावेव पर्यवसानात् तथैव व्याचष्टे (भ्रमज्ञानस्येति) भ्रमानुव्यवसायस्येत्यर्थः, अनुव्यवसाये यावद्व्यवसायविषयविषयकत्वरूपमूलोक्तापादकस्य ज्ञानान्तरे भ्रमत्वानापादकत्वात् ।

एतेन—सङ्करापादनमनुव्यवसाये प्रवर्तकत्वापादनरूपतया व्याख्याय जनकज्ञाने विद्यमाने बाधावतारस्य प्रवृत्तिप्रतिबन्धकत्वमयुक्तमिति "तदवतारे तस्यैव प्रतिबन्धकत्वा" दिति सिद्धान्तोपरि अनुशयेन

[म] बाधानवतारदशायां तस्येष्टत्वात्; तदवतारे तस्यैव प्रतिबन्धकत्वात्, उपनायकभ्रान्तेरभावाच्च । अत एवान्यभ्रान्तिग्रस्य न भ्रमः । अथ—तद्वत्त्वं न धर्मधर्मिवैशिष्ट्यमात्रम्, किन्तु तस्य विशेषणताविशेषः, स च व्यवसाये भासते, नानुव्यवसाये, मनसो बहिरस्वातन्त्र्यादिति चेन्न; व्यवसायोपनीतत्वेन विशेषणविशेष्ययोरिव विशेषणताविशेषस्यापि तद्विषयत्वात्, विशेषणताया निराकरिष्यमाणत्वाच्च । एतेनास्वप्रकाशे न स्वतः प्रामाण्यग्रहः, धर्म्यग्रहे तद्धर्माग्रहात्;

---

[दी] बाधानवतारदशायामनुव्यवसायस्य विषये तद्वत्तानवगाहित्वमिष्यत एव, बाधावतारे तु यदि तत्र न तद्ग्रहः तदा तस्यैव प्रतिबन्धकत्वं वाच्यम्, अन्यथा सिद्धापत्तिरेव, उत्तरकालश्च घटत्वप्रकारकत्वादिना-ज्ञानोपस्थितावपि न तथा ग्रहणम्, उपनायकस्य व्यवसायस्य अभावादित्याह (बाधानवतार इत्यादिना)

---

[ग] "उपनायकभ्रान्तेरभावाच्चे"ति फक्किकामवतार्य भ्रमस्य बाधरूपप्रतिबन्धकवशेनानुव्यवसाये वैशिष्ट्योपनायकत्वासम्भवान्न प्रवृत्त्यापादनमित्येनतारतया मिश्राणां तद्व्याख्यानं कुसृष्टिरेवेति सूचितम् ।

स्वव्याख्यातभ्रमत्वापत्त्यनुसारेण "बाधानवतार" इत्यादि फक्किकात्रयं व्याचष्टे (बाधेति) विषये तद्वत्तावगाहित्वम्—भ्रमविषये शुक्त्यादौ रजतत्वावगाहित्वम् । न तद्ग्रहः—निर्धर्मितावच्छेदकमपि तद्वत्त्वभानम् । तस्यैव-बाधग्रहस्यैव । वाच्यम्—समानविषयतामात्रेण तादृशभानेऽपि प्रतिबन्धकत्वं वाच्यम् । अन्यथा— असमानप्रकारकत्वेनैव प्रतिबन्धकत्वे । निर्धर्मितावच्छेदकतद्वत्त्वभानेन भ्रमत्वे इष्टापत्ति । इदमधिकं मूलस्य न्यूनताशङ्कायाभिहितम् । उत्तरकालम्—बाधनाशोत्तरम् । ज्ञानोपस्थितावपि — भ्रमरूपव्यवसायोपस्थित्या तदुपनीतभानेऽपि । न तथा ग्रहणम्—न

[मू] शब्दगन्धवद्योग्यत्वात्तद्ग्रहेऽपि ज्ञानं प्रमाणमिति धीर्न स्यात्, स्वप्रकाशेऽपि स्वमात्रसाक्षिणः स्वधर्मग्रहेऽसामर्थ्यात्; सामर्थ्ये वाऽप्रामाण्यमपि गृह्णीयात्,

---

[दी] (योग्यत्वादिति) स्वप्रकाशनये ज्ञानस्य स्वसामग्रीबलात् स्वस्वधर्मस्वविषयग्राहित्ववत् अस्वप्रकाशेऽपि तत एव तस्य स्वधर्मग्राहकत्वोपगमेऽपीत्यर्थः । अप्रामाण्यम्—अगृहीतभेदज्ञानद्वयत्वादिरूपम् ।

---

[ग] तद्विषये शुक्त्यादौ रजतत्वादिमत्त्वग्रहणम् । व्यवसायासत्त्वे विषयाभावेन व्यवसायस्यैव मानासम्भवाच्चद्विषये रजतत्वादिभानासम्भवेः उपनीतभानसम्पादकव्यवसायोपस्थितेरधिकाया अभिधानम् ।

ननु—"शब्दगन्धवद्योग्यत्वात्तद्ग्रहेऽपी" ति मूलमसङ्गतम्, शब्दगन्धादौ तद्ग्रहपूर्वं सन्निकर्षसत्त्वात्, प्रकृते च व्यवसायपूर्वं तद्वृत्तिधर्मे तद्घटितेन्द्रियसन्निकर्षासत्त्वात्, तदसत्त्वे च योग्यताया अकिञ्चित्करत्वादित्याशङ्कां निरस्यति (स्वप्रकाशनय इति) (स्वस्वधर्मस्वविषयग्राहित्ववदिति) तथा च—यथा तन्मते विषयग्रह एव पूर्वकाले तत्र सन्निकर्षापेक्षा, न तु—स्वस्य स्वधर्मस्य वा ग्रहे, स्वोत्पादकसामग्र्या एव तद्ग्राहकत्वात्, तथाऽस्वप्रकाशमतेऽपि स्वधर्मग्रहे न सन्निकर्षापेक्षा, अपि तु विषयग्रह एवेति भावः । तत एव—स्वसामग्रीबलादेव । ग्रहसिद्धावेव प्राधान्यस्य योग्यतासिद्धेस्तदलाभ विवादविषयग्रहनिर्वाह इत्यतो "ग्रहेऽपीति" मूल ग्रहोपगमपरतया वर्णितम् ।

गुरुमते व्यधिकरणप्रकारकत्वरूपभ्रमत्वस्य ज्ञानधर्मत्वाभावात् "सामर्थ्ये वाऽप्रामाण्यमपि गृह्णीया" दिति मूलमसङ्गतमतो व्याचष्टे (अप्रामाण्यमिति)

[म] परप्रकाशे लिङ्गेन मनसा वा जायमानं ज्ञानं न प्रमत्वाद्यत्तं प्रामाण्यं गृह्णीयात्, व्यभिचारात्; न च—यत्र यदस्ति तत्र तद्गृह्यते ! अप्रामाण्यस्यापि स्वतो ग्रहापत्तेः; अनुव्यवसायस्यानुमितेर्वा विषयाजन्यत्वाच्चेति निरस्तम्—तद्वति तत्प्रकारकज्ञानत्वं तद्वति तद्वैशिष्ट्यज्ञानत्वं वा प्रामाण्यं व्यवसायस्येति स्वेनानुव्यवसायेनानुमित्या वा तद्ग्रहात्, तद्विषयत्वस्य तत्प्रकारकत्वस्य च ज्ञानग्राहकसामग्रीग्राह्यत्वात् । यदि च प्रामाण्यं परतो ज्ञायेत, तदाऽप्रामाण्यज्ञानेऽपि तदनुमापकलिङ्गपक्षव्यासत्यादिज्ञानेषु च स्वविषयनिश्चयार्थं प्रामाण्यस्य परतो ज्ञेयत्वे फलमुखी कारणमुखी चानवस्था स्यादिति प्रामाण्यं न ज्ञायेतैवेति परिशेषादपि स्वतः प्रामाण्यग्रहः ।

इति पूर्वः पक्षः ।

---

[दी] (स्वविषयनिश्चयार्थमिति) निश्चितप्रामाण्यस्यैव ज्ञानस्य विषयनिश्चयरूपत्वादिति भावः । (न ज्ञायेतैवेति) तथा च अर्थनिश्चयाधीना निष्कम्प प्रवृत्तिर्न स्यादिति भावः । परिशेषः—अन्यथोपपत्तिविरहः ।

---

[ग] अनवस्थायां प्रामाण्यं न ज्ञायेतैवेत्यत्रैवापत्तिग्रहान्निरस्यति (तथा चेति) प्रामाण्यस्य स्वतो ग्राह्यत्वे परतोऽग्राह्यत्वेऽपीति ग्राह्यत्वरूपपरिशेषस्य हेतुत्वं न सम्भवति, मीमांसकैरप्यनुमित्यादिग्राह्यत्वरूपस्य परतो ग्राह्यत्वस्य प्रामाण्येऽभ्युपगमादसिद्धेरतः परिशेषं व्याचष्टे (परिशेष इति) अन्यथोपपत्तिविरहः । स्वतो ग्रहं विना ग्रहानुपपत्तिः । सा च तर्करूपा परमते प्रमाणान्तरम् ।

इति श्रीमहामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचिते
प्रामाण्यवादे
॥ पूर्वः पक्षः ॥

[म] तेन संशयव्यवच्छेदः । निश्चयत्वं वा विवक्षितमित्याहुः ।

[दी] तेन–तादृशप्रकारकत्वविवक्षणेन । संशयस्य–पृथिवीत्वादिसंशयस्य व्युदासः–तत्र व्यभिचाराभावः । निश्चयत्वं वा विवक्षितं ज्ञानपदेन, निश्चयपरं ज्ञानपदमिति यावत् । अतो ज्ञानपदवैयर्थ्यमिति भावः । निश्चयत्वं च प्रागुक्तं बोध्यम् ।

[ग] स्यैव गन्धसमानाधिकरणप्रकारकविषयताप्रतियोगित्वपर्यन्तेन विवक्षणीयत्वादिति ।

तेनेति मूलं व्याचष्टे ( तेनेति ) तादृशप्रकारकत्वविवक्षणेन प्रकार–त्वव्यापकगन्धसामानाधिकरण्यकत्वस्य प्रकारकान्तेन विवक्षया । घटादावयं घटो न वेत्यादिसंशये साध्यसत्वेन व्यभिचारानवकाशात् संशयपदं तद्विशेषपरतया व्याचष्टे ( संशयस्येति ) व्युदास इत्यस्य व्यावृत्तिरित्यर्थकत्वे तद्रूपसिद्धेः प्रयोजनाकाङ्क्षाया अनिवृत्तेस्तत्पदं व्याचष्टे ( तत्र व्यभिचाराभाव इति ) तेन व्यभिचारवारणस्य फलत्वलाभात् नोक्ताकाङ्क्षेति भावः । निश्चयत्वस्य स्वातन्त्र्येण हेतुघटकत्वे ज्ञानपदवैयर्थ्यमिति तत्पदमेव तदर्थकतया सार्थकयितुं पूरयति ( ज्ञानपदेनेति ) ( अतो ज्ञानपदावैयर्थ्यमिति ) पूर्वकल्पे चागत्या तत्परित्याज्यमेव । घटो न पृथिवीत्यादिनिश्चये व्यभिचारं निराकरोति ( निश्चयत्वञ्चेति ) ( प्रागुक्तमिति ) भ्रमव्यावृत्तं स्वविषयताप्रकाराविरुद्धप्रकारकविषयताकान्यत्वरूपमित्यर्थः । ननु विरुद्धोभयप्रकारकविषयताकान्यत्वम्, अपृथिवीत्वमात्रेण घटादिविषयके घटत्वादिना च घटादिविषयके ज्ञाने व्यभिचारात् । अपृथिवीत्वमात्रेण घटादिमात्रविषयकज्ञाने व्यभिचारवारणाय च गन्धसमानाधिकरणप्रकारकविषयताकत्वं मध्यमदलं यथाश्रुतमेवेत्यवधेयम् ।

केचित्तु विरुद्धोभयप्रकारकविषयताकान्यत्वमेव निश्चयत्वम्, गन्धसमानाधिकरणप्रकारकान्यीयविषयतासामान्यकत्वम्मध्यमदलार्थः, अपृथिवीत्वमात्रेण घटादिविषयके घटत्वादिना घटादिज्ञाने निश्चयत्वे-

[दी] गन्धवन्मात्रविशेष्यकज्ञानस्य पक्षत्वेन नाशतो बाधभागासिद्धी, के–चित्तु गन्धासमानाधिकरणप्रकारकविषयताकान्यत्वे सति गन्धासमानाधि–करणविषयताप्रतियोग्यन्यत्व फलितार्थः । तेन—सत्यन्तपदोपादानेन । पृथिवी न वेति संशयस्य पृथिव्या न पृथिवीति भ्रमस्य च व्युदास । सत्यन्त परित्यज्य वा निश्चयत्वम्, विवक्षितम्—विवक्षणाय ज्ञानपदेन । निश्चयत्व निश्चयस्य धर्मविशेष, स च पृथिव्या तदवृत्त्यप्रकारकत्वमित्याहु. । अन्ये तु पृथिवीभिन्नवृत्तिविषयताकत्वाभावसाध्यार्थ । करकाया पृथिवी–ज्ञानस्य वारणाय हेतावप्रकारान्तम् । जलनिर्विकल्पकवारणाय प्रकार–

---

[ग] ऽपि तज्ज्ञानविषयतासामान्यान्तर्गतपटादिविषयताया गन्धसमानाधिक–रणाप्रकारकत्वेन मध्यमदलाभावान्न व्यभिचार इत्याहुः । पाथः पृथिव्याविति ज्ञाने बाधासिद्धी पक्षसङ्कोचेन वारयति ( गन्धवन्मात्रेति) गन्धासमानाधिकरणाप्रकारकेत्यत्राप्रकारकपद सत्प्रकारकविषयताकान्यार्थ–कम्, तदन्यत्व च सामानाधिकरण्यसम्बन्धेन तदुत्तरदलार्थे विशेषणम्, उत्तरदल च प्रकारकपदस्य स्वरूपार्थकतया समानाधिकरणपदोत्तर मात्र–पदपूरणेन गन्धासमानाधिकरणविषयत्वाप्रतियोग्यर्थकमिति व्याचक्षाणाना केषाञ्चिन्मतमाह (केचित्त्विति) (फलितार्थ इति) प्रतियोग्यन्तस्येत्यादि । ज्ञानपद चैतत्कल्पे विवक्षितार्थकमेव । सत्यन्तानुपादाने पृथिव्याम्न पृथिवी ति भ्रमेऽपि व्यभिचारान्न्यूनताभङ्गाय पूरयति ( न पृथिवीति ) निश्चयत्व–निवेशे पूर्वदलस्यैव वैयर्थ्यात् वाकारस्य तद्दलनिवेशव्यवच्छेदार्थकतामावि–ष्करोति ( सत्यन्तमिति ) उक्तभ्रमवारणाय व्याचष्टे ( निश्चयत्वमिति ) ( तदवृत्तीति ) पृथिव्यवृत्तीत्यथ. । तथाच पृथिव्यवृत्तिप्रकारकपृथिवीवृत्ति–विषयताकान्यत्व प्रकृते निश्चयत्वमिति समुदितार्थ । रूपवती पृथिवीत्या–दिज्ञानस्य पक्षत्वे पृथिव्यवृत्तिरूपत्वादिप्रकारकरूपादिनिष्ठविषयताकेऽसिद्धि वारणाय विषयताया पृथिवीवृत्तित्वनिवेशनम् । अखण्डाभावघटकतया चावैयर्थ्यम् । ग्रन्थे पणान्तरविशेष्ये विशेषणे विषयतानभ्युपगमे तु तदनुपा देयमेव ( करकायामिति नाटगज्ञान करकामात्रवृत्तीदन्त्वादे प्रकारतया

[म] शीता पृथिवीत्यनुभवः पृथिव्यंशे प्रमैव,

[दी] कान्तमित्याहुः । तच्चिन्त्यम् । पृथिवीभिन्नवृत्तिपृथिवीत्वप्रकारकवि-षयताको नेति साध्ये शीता पृथिवीति भ्रमे प्रमात्वापादनं इष्टापादनत्वेन निराकुरुते ( शीतेति ) पृथिव्योरेवैते प्रायः पृथिव्याविति भ्रमे व्यभिचारं

[ग] अप्रकारान्तेन तद्वारणमिति भावः ( तच्चिन्त्यमिति ) एतन्मते पृथि-वीत्वेन करकास्मरणे करकमात्रवृत्तिधर्मप्रमानियमादप्रकारकान्तेन तत्र व्यभिचारवारणासम्भवः, जलनिर्विकल्पके व्यभिचारस्य सप्रकारकविषयता-निवेशेनैव वारणसम्भवात् प्रकारे गन्धसामानाधिकरण्यविशेषणस्य वैयर्थ्यं चेति चिन्ताबीजम् । अन्येत्वित्यादिमतसाध्यस्य प्रमात्वस्य विषयताश्रया-वृत्तिप्रकारकत्वाभावरूपप्रमात्वस्य च तादृशभ्रमसाधारण्यापत्तिशङ्कानिराकर-णपरतया 'शीते'त्यादिमूलं व्याचष्टे ( पृथिवीभिन्नेति ) ।

ननु 'प्रमाभ्रमरूप' इत्यादिमूलस्य पृथिवीत्वेन पृथिव्यपृथिवीविषय-कभ्रमे व्यभिचारवारणपरता न सम्भवति, गन्धवन्मात्रविषयताकत्वरूपहेत्व-भावादेव व्यभिचाराप्रसक्तेः; हेतौ मात्रार्थानन्तर्भावे पृथिव्यंशे तत्र भ्रमत्वा-भावसत्त्वेऽपि अन्यांशे भ्रमत्वसत्त्वेन भ्रमत्वं प्रति प्रतियोगिव्यधिकरणहेत्व-भावस्य व्यापकत्वायोगेन तदन्तर्भावस्यावश्यकत्वात् ।

अथ जलादिमात्रविषयकभ्रमे पृथिवीभिन्नमात्रविषयताकत्वाभावस्य विषयरूपावच्छेदकाभावेनासत्त्वात्तत्र साध्यव्यधिकरणभ्रमत्वरूपतदभावस्य प्रसिद्ध्या तादृशभ्रमत्वं प्रति हेतुव्यधिकरणहेत्वभावस्य व्यापकता सम्भव-तीति मात्रान्तर्भावोऽनर्थक इति चेत्; तथापि समूहालम्बनं पृथिव्यंशे-नापृथिवीवृत्तिविषयताकमिति व्यवहारस्य पृथिव्यां तादृशविषयताकत्वाव-च्छेदकत्वाभावविषयताकत्वेनाप्युपपत्तेरुक्तभ्रमत्वस्याऽव्याप्यवृत्तितायाः अप्रा-माणिकतयानुपगमेंऽशभेदेन भ्रमत्वाभावसत्त्वमुपगम्य सिद्धान्तो न साधुरतो प्रमा भ्रमरूप इत्यादिमूलमन्यथावतार्यान्यथा व्याचष्टे ( पृथिव्यांशेति ) ( व्यभिचारमिति ) तादृशसमूहालम्बनस्य पार्थस्यांशे भ्रमतया तत्र प्रमा-त्वरूपं साध्याभावस्त्वत्यभिमानेन प्रसक्तं गन्धवन्मात्रविशेष्यताकत्वहेतोर्व्य-

[म] प्रमा—भ्रमरूपे च समूहालम्बने न व्यभिचारः, अंशे तस्यापि प्रमात्वात्; विशेष्यभेदेन विषयताभेदाच्च ।

---

[दी] निरस्यति ( प्रमेति ) अंशे—पृथिवीत्वांशे । अथ तथापि विषयताश्रयावृत्तीति साध्ये पायः पृथिव्योरिमे पृथिव्याविंत्याकारकभ्रमत्वेन सिद्धसाधनमर्थान्तरं वा, पायोवृत्तिविषयतायाः पृथिवीवृत्तित्वेन पृथिवीत्वस्य तदाश्रयवृत्तित्वात्, अत आह ( विशेष्यभेदेनेति ) अथ विशेष्यस्येव विशेषणस्यापि भेदेन विषयताभेदः, तथा च विषयताश्रयावृत्तीति साध्ये हेतोर्निश्चयत्वेन घटितस्वात्तद्घटकोभयप्रकारकविषयताया असिद्धत्वेनाप्रसिद्धिरत आह

---

[ग] भिचारमित्यर्थः ( निरस्यतीति ) अभिमानं निरस्येत्यादि ( पृथिवीत्वांश इति ) तथा च पृथिवीत्वरूपप्रकारघटितप्रमात्वरूपस्य उक्तसाधनीय साध्यस्य तत्र सत्वान्न व्यभिचार इति मूलार्थः । विशेष्यभेदेन विषयताभेदानभ्युपगमे पृथिव्यपृथिवीविषयकज्ञाने पृथिव्यंशेऽपि साध्यसत्त्वं निर्वहतीति 'विशेष्यभेदेने'ति मूलावतरणमुक्तरीत्या पूर्वग्रन्थव्याख्याया न सम्भवतीत्यन्यथा तदवतारयति ( अथ तथापीति ) इत्याकारकभ्रमत्वेन—उक्तसाध्यवति तादृशभ्रमत्वसत्त्वेन । सिद्धसाधनम् —सिद्धतुल्यस्यैव साधनम्, अनुपयुक्तसिद्धिकस्य साधनमित्यर्थः । भ्रमसाधारणधर्मस्यानुपयुक्तसिद्धिकत्वादिति भावः । अर्थान्तरम्—अनुपयुक्तसाधनम् । वाकारस्समुच्चये । उक्तसाध्यस्य भ्रमसाधारण्यं घटयति ( पायोवृत्तीति ) ( पृथिवीवृत्तित्वेनेति ) विषयताभेदकप्रकारभेदनिग्रहेण पृथिवीवृत्तिविषयत्वाभिन्नत्वेनेत्यर्थः ( तदाश्रयेति ) तज्ज्ञानविषयताश्रयेत्यर्थः । विशेष्यभेदेन विषयताभेदे प्रकारभेदेन तद्भेदेऽपि कथितसमाधानसम्भवात् 'न च प्रकारभेदेन विषयताभेद' इति मूलमनुपपत्त्यन्तराशङ्कयाऽवतारयति ( अथ विशेष्यस्येति ) ( तद्घटकोभयप्रकारकविषयताया इति ) विरुद्धोभयप्रकारकविषयताकान्यत्वरूपनिश्चयत्वघटकीभूताया स्वप्रकारविरुद्धप्रकारकविषयताया इत्यर्थः । अप्रसिद्धिः—साध्याप्रसिद्धिः । विशेष्यभेदप्रकारभेदयोरेकस्य

**[म] न च प्रकारभेदेन विषयताभेदः, मानाभावात् ।**

[दी] ( न चेति ) ( मानाभावादिति ) पाथः पृथिव्योरिमे पृथिव्याविति ज्ञानं विषयताश्रयावृत्तिप्रकारकम्, न तु पाथः पृथिव्याविती‍ति सार्वलौकिको व्यवहारादिः, न तु संशयो न विरुद्धोभयप्रकारकविषयताक इति

[ग] विषयताभेदकल्पं प्रामाणिकं नापरस्येति विशेषः कथमित्याकाङ्क्षायामाह ( पाथ इति ) एतदेव व्यवहाराकारकथनम् । प्रकारकम्—प्रकारकविषयताकम् । विशेष्यभेदेन विषयताभेदविरहे पृथिवीत्वस्य तज्ज्ञानविषयताश्रयावृत्तित्वविरहेण तादृशव्यवहारानुपपत्तिरिति भावः ।

न च —विशेष्यभेदेन विषयताभेदेऽपि पृथिव्यास्तत्तज्ज्ञानविषयताश्रयत्वानपायात् पृथिवीत्वस्य विषयताश्रयावृत्तित्वं दुर्घटमिति तादृशव्यवहारानुपपत्तितादवस्थ्यमिति वाच्यम् ; विषयतापदस्य विषयताश्रयावृत्तिप्रकारकत्वेनोपादेयविषयताव्यक्तिपरत्वात् । एतदेवाविष्कुर्वन्नाह ( न त्विति ) पाथः पृथिव्योः पाथः पृथिव्याविति ज्ञानं विषयताश्रयावृत्तिप्रकारकमिति व्यवहारादिरित्यनुषङ्गेणान्वयो बोद्धव्यः । विषयतापदस्य तज्ज्ञानीयविषयतासामान्यपरत्वे जलत्वपृथिवीत्वाभ्यां पृथिवीजलादिविषयकभ्रमे न विषयताश्रयावृत्तिप्रकारकमिदं ज्ञानमिति व्यवहारापत्त्या तज्ज्ञानीययत्किञ्चिद्विषयतापरत्वस्यैव स्वीकारे उक्तसमूहालम्बनप्रमायामपि तदनुपपत्तेस्तत्र तत्र विषयतापदं समभिव्याहृतपरमेवेति भावः ।

यद्यप्याश्रयपदस्य यत्किञ्चिदाश्रयपरत्वे पाथः पृथिव्योरिमे पृथिव्याविति ज्ञानं विषयताश्रयावृत्तिप्रकारकमिति व्यवहारस्य विषयत्वाभेदेऽप्युपपत्तिः; तथापि तथा सति पृथिव्या अपि तदाश्रयतयाश्रयपदस्य तत्परतया न विषयताश्रयावृत्तिप्रकारकमिति व्यवहारस्यापत्तिर्दुर्वारैवेति बोद्धव्यम् ।

एकप्रकारकस्याप्युभयविषयकज्ञानस्य उभयवृत्त्येकविषयतास्वीकारे [illegible] ज्ञानीयप्रत्येकवृत्तिविषयताद्वयातिरिक्तविषयताकल्पने [illegible]

[illegible] ।

ति तु तत्त्वम् । 'न तु कस्यापि [illegible]

[दी] कस्यापि, प्रत्युत विपरीत एवेति भावः । वस्तुतो विशेषणभेदेन विषयताभेदेऽपि एकधर्मिकमिथो विरुद्धप्रकारकविषयताद्वयप्रतियोगित्वं

---

[ग] न च प्रकारभेदेन विषयताभेदेऽपि विरुद्धोभयप्रकारकविषयताया अप्रसिद्धया न विरुद्धोभयप्रकारकविषयताक इति व्यवहारस्य नापत्तिरिति वाच्यम्; तथा सति तत्प्रकारकविषयताया तद्विरुद्धप्रकारकत्वाभावतात्पर्येण तथा व्यवहारापत्तेः, तादृशशब्देन तथा विषयताया तादृशाभावस्याबोधनात् । विषयताभेदे नोक्तबाधकमस्त्येव इत्यत उभयप्रकारकविषयताया अभेदे साधकमाह ( प्रत्युतेति ) ( विपरीत इति ) संशय उभयप्रकारकविषयताक इत्याकार इत्यर्थः । व्यवहारादिरित्यनुषज्यते ।

नन्वाश्रयभेदेन रूपभेदेऽपि घटोभयरूपं पश्यतीति व्यवहारो द्वित्वेनोपस्थितयोर्धर्मिणोः प्रत्येकमाधेयत्वयोरन्वयाच्चयोः प्रत्येकं रूपद्वये अन्वयादुपपादितार्थकस्तथा विषयताभेदेऽप्युभयप्रकारकविषयताक इति व्यवहारोऽपि; न च प्रकारभेदेन विषयताभेदे गौरवात्तत्पूर्वैकविषयतासिद्धिरिति वाच्यम्, एकैकप्रकारकविषयताद्वयस्य प्रत्येकनिश्चये क्लृप्तत्वादुभयप्रकारकज्ञाने एकविषयतास्वीकार एवाधिकविषयताकल्पनेन गौरवात् ।

न च—भावाभावोभयप्रकारकसंशयस्यान्यप्रवृत्तिरुत्वज्ञानासत्त्वे विरोधानुपस्थितिदशायामप्यानुमानिकतया विरोधाविषयकस्य तदुभयप्रकारकसमुच्चयवैलक्षण्याय संशये उभयप्रकारकैकविषयताकल्पनमावश्यकमिति वाच्यम्, एवं सति समुच्चये प्रकारभेदेन विषयताभेदस्यावश्यकत्वे तत्रैव विरुद्धोभयप्रकारकविषयताकान्यान्यस्वनिश्चयत्वघटितहेतोर्विषयताश्रयाणुधीत्यादिनाप्यव्यभिचारित्वमावश्यकम् ।

वस्तुतः शुद्धद्रव्यत्वावच्छेदेन पृथिवीत्व निर्गन्धद्रव्यत्वावच्छेदेन तदभावमवगाहमाने संशयेऽपि विशेष्यतावच्छेदकन्यूनाधिकभावेन विशेष्यतृधिविषयताभेदस्यावश्यकतया संशयसमुच्चयवैलक्षण्यमन्यथैवोपपादनीयमित्यस्वरसात्स्वयं प्रकारभेदेन विषयताभेदमभ्युपगम्यापि प्रकृतहेतुघटकनिश्चयत्वमन्यथा निर्वक्ति ( वस्तुत इति ) ( एकधर्मिकेति ) इत्तिसमुदित-

[म] यत्त्वियं पृथिवीत्यनुभवः पृथिवीत्वसमानाधिकरणधर्मावच्छिन्नपृथिवीविशेष्यकविषयताकः, पृथिवीत्वव्यधिकरणधर्मानवच्छिन्नपृथिवीविशेष्यकविषयताकः, पृथिव्यवृत्तिधर्मानवच्छिन्नपृथिवीविशेष्यकविषयताको वा; गन्धासमानाधिकरणधर्मप्रकारकविषयताप्रतियोगिज्ञानत्वात् , अगन्धवदवृत्तिपृथिवीत्वप्रकारकविषयताकत्वात् ,गन्धसमानाधिकरणविषयताप्रतियोगिज्ञानत्वाद्वेति । तन्न, साध्याप्रसिद्धेः। किन्त्वर्थादेव तत्सिद्ध्यति । एवं यत्प्रकारव्याप्यतया

---

संशयत्वं सुवचम् । स्वव्यधिकरणपृथिवीत्वप्रकारकविषयताको न, गन्धासमानाधिकरणपृथिवीत्वप्रकारकविषयतान्यत्वादित्यपि प्रकारस्सम्भवति । अत्र च पृथिवी तदितरविशेष्यकसमूहालम्बनप्रमायाः पक्षत्वेऽपि न क्षतिः

---

विषयताप्रकारविरुद्धप्रकारकविषयताकत्वमित्यर्थः । विरुद्धत्वं वास्तवम् ( संशयत्वं सुवचमिति ) तथा च तादृशसंशयत्वशून्यत्वमेवाव्याप्यवृत्तित्वभ्रमविषयविरुद्धोभयप्रकारकसमुच्चयादपि व्यावृत्तं निश्चयत्वं हेतुघटकमिति भावः । हेतौ निश्चयत्वगनिवेशस्यापि विषयताश्रयावृत्तीत्यादिसाध्ये पृथिवीत्वात्मकप्रकारं निवेश्य तत्साधकमनुमानं परिष्करोति ( स्वव्यधिकरणेति ) स्वम् - विषयता । पृथिवी न वेति संशये पृथिवीवृत्तिविषयतायाः स्वव्यधिकरणपृथिवीत्वाभावप्रकारकत्वेऽपि तद्व्यधिकरण्यं न पृथिवीत्वरूपप्रकारस्येति अकादौ पृथिवीत्वभ्रमविषयतैव स्वव्यधिकरणपृथिवीत्वप्रकारिका, तादृशविषयताकान्यत्वरूपं साध्य तत्संशय अक्षतमेवेति भावः । प्रायः पृथिव्योरिति वक्ष्यमाणसमूहालम्बनसाधारण्याय हेतौ विषयतायां पृथिवीत्वप्रकारकत्व विशेषणम् , तथा च तादृशसमूहालम्बने पृथिव्यां पृथिवी न वेति संशये च तदानीं हेतुसाध्ययोस्सत्त्वेन पक्षान्तर्भाव एव सम्भवतीत्याह ( अत्र चेति ) नन्वेवं यत्प्रकारव्याप्यतयेत्यादिनिखिलज्ञानप्रामाण्यसाधकलिङ्गसङ्ग्रहमनपमूले समर्थधवृत्तिज्ञानकत्वस्य गन्धादिसमभिव्याहारेणोपादान-

**विशेष्यावृत्तिप्रकाराभाववत्त्वं वा प्रामाण्यं मनसैव परिच्छिद्यतामिति स्वत एवं प्रामाण्यग्रह इति चेत् ? न, ज्ञाना-**

---

[दा] 'जन्यज्ञानग्राहकत्वादि'ति क्वाचित्कपाठे प्रामाण्यग्रहस्येत्यनन्तरं जनक इत्यध्याहार्यम् । प्रमा – शरीरत्ववति शरीरत्वप्रकारक

---

[ग] ज्ञानत्वेन ज्ञानस्य दाहसमर्थस्य च उपस्थितौ इदन्त्वावच्छिन्नविषयक ज्ञाने दाहसामर्थ्यविशेषितधर्मिविशेषणक मानस प्रथममुत्पद्यते, तावता दाहसमर्थविषयतारूपविशिष्टविशेषणोपस्थितौ निरूपितत्वसम्बन्धेन तादृशविशेषणविशिष्टवह्नित्वप्रकारकत्वरूपहेतोर्मनसैव परिच्छेद इत्यर्थ । एवञ्चानुव्यवसायस्य ज्ञानानुपनीतव्यवसायप्रकारविशिष्टधर्मिविषयकत्वमात्रग्रह एवासामर्थ्येऽपि न क्षतिरिति भाव । एवञ्च सति "स्मृत्युपनीतदाहसमर्थविषयत्व" मिति मूलस्य स्मृत्युपनीतो यो दाहसमर्थस्तद्विशेष्यतया मानसज्ञाने भान यत् स्मृत्युपनीतविषयत्व तस्य स्मृत्युपनीतव्यवसायीयवह्नित्वप्रकारकत्वे मानसो निश्चय इति मूलार्थः । ननु विशिष्टविषयत्व स्मृत्युपनीतमिति । अत्र च वह्नित्वप्रकारकस्येन दाहसामर्थ्यप्रकारकस्यापि ज्ञानस्यानुव्यवसाये सति विशिष्टस्यैवानुभूततया स्मरणसम्भवेन स्मृत्युपनीतदाहसमर्थविषयत्वमिति मूलस्य यथाश्रुतपरतासम्भवे किमितावता प्रयासेन, व्यवसायप्रकारविशिष्टधर्मिविषयकत्वस्य च तत्प्रकारकत्वावच्छेदकत्वविनिर्मुक्तस्य ग्रहेऽनुव्यवसायसामर्थ्यं प्रागवस्थापितमेवेत्यस्वरसर्थानम् । मनसा चैव प्रामाण्यग्रहस्य तज्ज्ञानविषयक जन्यज्ञान जन्यत्वादिति मूलपाठ सुगम एव । जन्यज्ञानग्राहकत्वादिति मूलपाठे ग्रहस्य ग्राहकत्वाभिधानमसङ्गतम् , तद्विषयप्रामाण्यस्यैव ग्राहकतायाः प्रकृतत्वादस्मत्पाठं सङ्गमयति ( जन्यज्ञानग्राहकत्वादिति ) ( जनक इत्यध्याहार्यमिति ) एवञ्च — पूर्वरीत्या प्रामाण्यग्रहस्य मनसा जनके सतीत्यर्थं । न परतस्त्वहानिरित्यत्र प्रामाण्यस्य पुमयपाठ एव पूर्वोक्तनया तस्य ग्राहकताभावापादनयोरेतस्य पुनरास्वादमभिप्रेतम् । इद शरीरज्ञान प्रमा इत्र प्रमन्त्वाभावरूपाप्रामाण्यस्य ग्राह्यत्वे शरीरशरीर ... विचार , भारम्भत्र तस्यस्य पूर्वं प्रतिदर्श तत्प्राप्यत-

[म] न्तरोपस्थापितज्ञानवृत्तिप्रामाण्यग्रहे परतस्त्वानपायात् । यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वम्, यावत्स्वाश्रयग्राहकग्राह्यत्वम्, तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्यज्ञानग्राह्यत्वं वा स्वतस्त्वम्, तदन्यथा ग्राह्यत्वन्तु परतस्त्वम्, मनसा चैवं प्रामाण्यग्रहस्याभ्युपगमे तज्ज्ञानविषयकजन्यज्ञानजन्यज्ञान-परतस्त्वहानिः । व्यतिरेक्यनन्तरं तज्जातीयत्वेनान्वयिना ग्राह्यत्वान्न प्रामाण्यानुमानम् । यथा—इदं शरीरज्ञानं प्रमा, करचरणवति शरीरज्ञानत्वात्; स्वशरीरज्ञानवत् । न च कर—चरणान्तरवति करचरणान्तरवत्त्वज्ञाने व्यभिचारः, शरीरांशे तस्य प्रमात्वात् ।

---

[दी] ज्ञानम् । करचरणयोः प्रत्येकमेव हेतौ प्रवेशः ।

---

[ग] नैवोपपत्तौ करादिमन्मात्रविशेष्यकत्वपर्यन्तस्य हेतुप्रवेशोऽनुचितः, अभावरूपप्रामाण्यस्य साध्यत्वे हेतुघटकशरीरत्वप्रकारकत्वस्यापि वैयर्थ्यमित्याशयेन व्याचष्टे ( शरीरत्ववतीति ) शरीरत्ववद्विशेष्यकमित्यर्थः । हेतुप्रविष्टज्ञानत्वसार्थक्याय साध्येऽपि ज्ञानत्वमन्तर्भावयति ( ज्ञानमिति ) करचरणयोः प्रत्येकमेव शरीरत्वव्याप्यतया एकत्रोभयप्रवेशे वैयर्थ्यमित्याशयेनाह ( करेति ) मूले प्रमापदस्य विशेष्यावृत्तिप्रकारकान्यत्वपरताभिमानेन बाधितकरादिविषयकशरीरत्वविशिष्टज्ञाने व्यभिचारशङ्का ( न चेति ) अभिमाननिराकरणेन समाधानम् ( शरीरांश इति ) ( नोपलक्षणमिति ) नेत्यनन्तरं ज्ञान इति बोध्यम् । तदुपलक्षणत्वञ्च तद्व्यावर्त्तकधर्मान्तरोपस्थापकत्वम् । व्यावृत्तोपलक्ष्याभावात्—व्यावृत्तस्य—उपस्थाप्यस्याभावात्; व्यावृत्ततया सुग्रहस्य धर्मान्तरस्यानुपस्थापनादिति यावत् ।

एतेन वस्तुतो भ्रमव्यावृत्तस्य विषयताविशेषस्य विषयतात्वतद्व्यक्तित्वादिना उपस्थितिसम्भवेऽपि न क्षतिः ।

विषयतादेर्निर्विषयकादिव्यावृत्तत्वं सुग्रहमेवेति व्यावृत्तपदं विशेष-

[म] एतेन कर-चरणवति शरीरज्ञानत्वादित्यत्र कर-चरणवत्वं नोपलक्षणम्, व्यावृत्तोपलक्ष्याभावात्; न च विषयतया ज्ञानविशेषणम्, कर-चरणवत्त्वप्रकारकशरीरज्ञानत्वस्य व्यभिचारात्, शरीरमिति ज्ञाने तदसिद्धेश्च। विषयविशेषणत्वे कर-चरणवद्विषयकशरीरज्ञानत्वस्य व्यभिचारात्, शरीरभ्रमस्यापि वस्तुतः करादिमद्विषयकत्वात्; नापि कर-चरणादिशून्ये यच्छरीरत्वेन ज्ञानं तदन्यत्वे सतीति विवक्षितम्, शून्य इत्यत्र विषयत्वं सप्तम्यर्थ इति कर-चरणशून्यविषयकशरीरज्ञानान्यशरीरज्ञानत्वादित्यर्थः, तथा चासिद्धिः, शरीरज्ञानस्य तच्छून्यशरीरत्वादिविषयकत्वनियमात्। न वा

---

[दी] (व्यावृत्तेति) भ्रमव्यावृत्तेत्यर्थः। असिद्धिः—अप्रसिद्धिः। (नचेति) आद्ये

---

[ग] परतथा व्याचष्टे दीधितौ (भ्रमेति) भ्रमव्यावृत्तत्वम्—भ्रमावृत्तित्वम्, तदसत्त्वे च भ्रमसाधारण्यशङ्कया व्यभिचारशङ्काया अनिवृत्तिरिति भावः। "ज्ञानविशेषण" मिति मूलं अतो ज्ञानव्यावर्तकमित्यर्थकम्। व्यभिचारात्—भ्रमसाधारण्यात् (शरीरमिति) ज्ञाने-कराद्यविषयके। तदसिद्धेः—विषयितया करादिमत्त्वासिद्धेः (विषयविशेषणत्व इति) आश्रयतया शरीरभिन्नशरीरत्वारोपविशेष्याद्विषयितया ज्ञानविशेषणविषयस्य व्यावर्तनेन तादृशभ्रमात् स्वघटितहेतोर्व्यावर्तकत्वेऽपीत्यर्थः। करचरणवद्विषयकशरीरज्ञानत्वस्य—इदानीमभिमतस्य तादृशज्ञानत्वरूपहेतो। व्यभिचारात्—शरीराभेदभ्रमे व्यभिचारात्। व्यभिचारं स्फुटयति (शरीरभ्रमस्यापीति) (करादिमद्विषयकत्वादिति) विशेषणतयान्वयि। 'तथा चासिद्धिरि' त्यत्रासिद्धिपदस्य पक्षे हेत्वसिद्धिरर्थो न सम्भवति, हेतोरेवाप्रसिद्धेरिति तद्व्याचष्टे (असिद्धिरिति) न चेत्यादिनाप्यनेन शङ्कनीयस्य पूर्वं न चेत्यादिनैवाशङ्क्य निराकृतत्वात् पौनरुक्त्यमाशङ्क्याह (आद्य इति) समर्थनेन, व्यभिचारवारणं तात्पर्यादिति योजना। "करचरणशून्य" इति

[म] कर-चरणशून्ये यच्छरीरत्वेन ज्ञानं न भवतीति विवक्षितम्, तृतीयार्थस्य विषयत्वे उक्तदोषात्; अन्यस्यासम्भवादिति निरस्तम् । कर-चरणवद्विशेष्यकशरीरत्वप्रकारक-

---

[दी] सप्तम्यर्थेनात्र च तृतीयार्थेन व्यभिचारवारणे तात्पर्यात्राभेदः । (करचरणेति) विशेष्यतावच्छेदेन प्रकारता बोध्या । तेन विपरीतचतुष्कादौ

---

[ग] सप्तम्यन्तेन यत्प्रतिपाद्यते तस्योक्तभ्रमे सत्त्वात्तदन्यत्वे सतीत्यन्तं न भ्रमे इति तात्पर्यादित्यर्थः । अत एव दूषणदशायां "विषयत्वं सप्तम्यर्थ" इत्यनेन सप्तम्यर्थ एव विवृत इति भावः । अत्र शरीरत्वप्रकारकप्रमाया अपि करचरणशून्यशरीरत्वविषयकत्वादप्रसिद्धिरिति दूषणमयुक्तम्, तज्ज्ञानस्य तच्छून्यविषयकत्वेऽपि शरीरत्वेनेति तृतीयापर्यन्तेन यथा प्रतिपाद्यते तथात्वाभावात् । अत उक्तविवक्षयैव व्यभिचारो वारणीय इति न चेत्यादिमिमशङ्कार्थ इत्याह ( अत्र च तृतीयार्थेनेति ) तृतीयार्थस्याप्रसिद्धिवारकतया विवक्षितपरिष्कारकत्वेन विवक्षाधीनव्यभिचारवारणेऽप्रयोगिता बोध्या ।

यद्यपि शरीरमिदमित्यादिभ्रमो यदि शरीरत्वत्वेन न शरीरत्वादिविषयिणी, अपि तु तद्रूपेण शरीरमात्रविषयिण्येव, तदा शरीरमित्यशरीरे शरीराभेदारोपोऽपि शरीरत्वेन शरीरमात्रं विषय इति करादिशून्यस्य यच्छरीरत्वेन ज्ञानं तदन्यत्वं तत्राक्षतमेवेति व्यभिचारो दुर्वारः, तथापि शरीरत्वविशिष्टस्याभेदारोपे विशेष्यांशेऽपि शरीरत्वं नियमतो भासत इत्यभिप्रायेणाशङ्कासङ्गतिः । मूले (विषयत्व इति) विषयतारूपस्य इत्यर्थः । ( उक्तदोषादिति ) विषयतारूपस्य तृतीयार्थस्य ज्ञान एवान्वयात् करादिशून्यशरीरत्वादिनिष्ठविषयतायास्तेनाव्यावृत्त्या अप्रसिद्धितादवस्थ्यादिति भावः । दीधितौ-(विशेष्यतावच्छेदेनेति) विशेष्यताप्रकारतयोर्वैयधिकरण्येऽपि निरूपकतासम्बन्धेन ज्ञाने सम्बद्ध्यमानयोरवच्छेद्यावच्छेदकभावाविरोध इति ध्येयम् । (विपरीतचतुष्कादाविति) शरीराशरीरयोरशरीरत्वशरीरत्वभ्रमादावित्यर्थः । आदिपदेन शरीरे द्रव्यत्वादिमात्रमशरीरे च शरीरत्वभ्रम-

[म] ज्ञानत्वस्य हेतुत्वात्, शरीरभ्रमे च कर—चरणवतः शरीरस्य विशेषणत्वात्। विषयतापक्षे करचरणादिशून्य-निष्ठशरीरत्वप्रकारकविषयताप्रतियोगित्वशून्यत्वे सति श-रीरज्ञानत्वादिति हेतुः।

---

[दी] न व्यभिचार । ( शरीरस्येति ) तथा च साध्यहेत्वोर्मुख्यैव विशे-ष्यता प्रविष्टेति न सिद्धसाधनव्यभिचारयोरवकाश । पृथिव्यादिज्ञानन्तु पृथिव्याद्यप्रकारकमेव पक्षः । अतो नाभेदारोपतयाऽर्थान्तरस्यावकाशः । अभेदारोपे तु विशेषणांशे साध्यसत्त्वान्न व्यभिचार इति ऋजुरेव पन्था ।

---

[ग] गाह्यमानस्य परिग्रह । शरीरविशेष्यतावच्छिन्नशरीरत्वप्रकारताशालि-स्वरूपप्रामाण्यस्य तत्रासत्त्वाद्व्यभिचारमसक्तिः । विशेष्यताप्रकारतयोरवच्छे-द्यावच्छेदकभावाघटितस्य शरीरविशेष्यकत्वे सति शरीरत्वप्रकारकत्वस्य भ्रम-साधारणतया तत्सिद्धेरनुद्देश्यतया तस्यासाध्यत्वादिति भावः ।

ननु 'शरीरस्य विशेषणत्वादि'त्ययुक्तम्, शरीरभिन्ने तस्याभेदेन विशेषणत्वेऽपि शरीरत्वादिविशेष्यतया तस्य विशेषणतया विशेष्यताघटि-तस्यापि हेतोरभेदभ्रमव्यावृत्तत्वाघनुयोगित्वाचाहरभ्रमस्य शरीरत्वांशे श-रीरविशेष्यकत्वेन साध्यसत्त्वाचेत्यत आह ( तथा चेति ) शरीरस्याभेदा-रोपे विशेषणत्वे चेत्यर्थ ( मुख्येति ) इतरविशेषणतानवच्छिन्न इत्यर्थ ( न सिद्धसाधनेति ) साध्ये मुख्यविशेष्यतानिवेशात् साध्यस्य भ्रमसाधा-रण्यप्रयुक्ताया उद्देश्यासिद्धे, हेतोस्तत्साधारण्यप्रयुक्तस्य उक्तयुक्त्या मुख्य विशेष्यतया घटितस्य साध्यस्य हेतौ व्यभिचारस्य च नावकाश इत्यर्थः । उभयत्र मुख्यविशेष्यतानिवेशस्यापि स्वयमुद्देश्यासिद्धिं व्यभिचारञ्च वारयति ( पृथिव्यादिज्ञानन्त्विति ) आदिना शरीरादिपरिग्रह ( पृथिव्याद्यप्रकारक-मिति ) पृथिव्याद्यप्रकारकत्वविशेषितामित्यर्थं । तथा च तदारोपे तत्प्रकार-कत्वसत्त्वेन तादृशपक्षतावच्छेदकसहितस्य पृथिवीत्वादिमति तत्प्र-कारकत्वरूपसाध्यस्यारोपव्यावृत्ततया तत्सिद्धावुद्देश्यसिद्धिरित्याह ( अत इति ) ( विशेषणांशे साध्यसत्त्वादिति ) इतरविशेषणताप्रसस्य विशेष्यता-

[म] ननु नान्यगृहीतप्रामाण्यं ज्ञानं परप्रामाण्यनिश्चयरूपम्, अनवस्थानात् । नापि स्वज्ञायमानप्रामाण्यम्, स्वतः प्रामाण्यग्रहापत्तेः । अतोऽगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यनिश्चयरूपमास्थेयम् । तथा च व्यवसायोऽप्यगृहीतप्रामाण्य एव स्वविषयं निश्चाययतु, किं विषयनिश्चयार्थं तत्प्रामाण्यनिश्चयेन । अथ व्यवसायस्याप्रामाण्यदर्शनान्न तन्मात्रादर्थनिश्चयः; तर्हि प्रामाण्यानुमितेरप्यप्रामाण्यदर्शनान्न ततोऽपि प्रामाण्यनिश्चय इति चेत् । न ब्रूमो ज्ञानप्रामाण्यनिश्चयादेवार्थनिश्चय इति, किन्तु यत्राप्रामाण्यशङ्का नास्ति करतलामलकादिज्ञाने तत्र व्यवसाय एवार्थनिश्चय इति तत एव प्रवृत्तिर्निष्कम्पा, यत्रानभ्यासदशायां प्रामाण्यसंशयेनार्थनिश्चयं परिभूयार्थसंशयः तत्र प्रामाण्यनिश्चयाधीनज्ञानादर्थं निश्चित्य निष्कम्पं प्रवर्त्तते नान्यथेति सर्वानुभवसिद्धम् । अतएवागृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्य

[दी] मिश्रमतेऽनुव्यवसायप्रामाण्यस्यानुव्यवसायानन्तरग्राह्यत्वादनवस्थेत्यपि द्रष्टव्यम् । प्रामाण्यस्य स्वग्राह्यत्वम्—स्वविषयत्वम्, स्वस्य प्रामाण्यविषयकत्वमिति यावत् । तद्ग्रहं विना तद्घटितप्रामाण्यग्रहायोगादिति तद्ग्रामा·

[ग] मादाय साध्यसत्त्वादित्यर्थः। निश्चितप्रामाण्यकस्यैव व्यवसाये तत्प्रामाण्यादिज्ञानस्य निश्चयकार्यकारित्वे भट्टमते व्यवसाये ज्ञाततालिङ्गकतत्प्रामाण्यानुमित्यादिष्वनवस्थितप्रामाण्यानुमितिपरम्पराया इव मुरारिमतेऽप्यनवस्थितव्यवसायप्रामाण्यविषयकतदनुव्यवसायतत्प्रामाण्यविषयकतदनुव्यवसायादिघटितानुव्यवसायधारायाः कल्पनापत्तिरस्तीति न्यूनतामपाकर्तुं दर्शयति ( मिश्रमत इति ) स्वजन्यग्रहविषयत्वरूप स्वग्राह्यत्वं गुरुमतेऽपि प्रामाण्यस्येति स्वग्राह्यत्वं व्याचष्टे (स्वविषयत्वमिति) तद्ग्रहस्यानुपयुक्तत्वेऽनभ्युपगमसम्भवान्नानवस्थाप्रसक्तिरिति प्रामाण्यघटितप्रामाण्यग्रहे तदुपयोगितां घटयिष्यन् तस्य प्रामाण्यमिति प्रामाण्याश्रयत्वघटकतामाविष्करोति ( स्वस्येति ) व्यवसायस्येत्यर्थः । व्यवसायस्य यत्प्रकारत्वं न्यायसिद्धं

[मू] निश्चाययति, अप्रामाण्यशङ्काकलङ्काभावात् । यत्र तु प्रामाण्यज्ञाने अप्रामाण्यशङ्कया प्रामाण्यसंशयः तत्र प्रामाण्यज्ञाने प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः, एवं यावदप्रमाण्यशङ्कं तज्ज्ञानप्रामाण्यनिश्चयादेव तन्निश्चयः । न चैवमनवस्था, चरमज्ञानप्रामाण्यज्ञानज्ञानस्य ज्ञानाभावेन कोटिस्मरणाभावेन विषयान्तरसञ्चारेण वा प्रामाण्यसं-

[दी] ण्यधाराघटितप्रामाण्यप्रवाहग्राहित्वे व्यवसायस्य विषयापर्यवसानमेव स्यात्, तथा चावश्यं कस्यचित्प्रामाण्यस्य परतस्त्वं वक्तव्यम्, एवं तदादिघटितप्रामाण्येऽपीत्यनवस्थेत्यर्थः ।

---

[रा] तद्घटितप्रामाण्यबहिर्भावेन मूलकृतस्तादृशप्रामाण्यावगाहिताया व्यवसायग्राह्यताखण्डनमसङ्गतम्, तद्बहिर्भावेऽपि तस्या व्यवसायग्राह्यतासम्भवात्; अतो विषयानवस्थया तन्निराकरोति (तत्तदिति) परतस्त्वम्—अनुमित्यादिग्राह्यत्वम् । (तदादीति) तत्प्रामाण्यादीत्यर्थः । परतस्त्वं वक्तव्यमित्यनुषज्यते । अनवस्था—अनुमित्यादिरूपप्रामाण्यज्ञानप्रवाहा विश्रान्तिः । एतादृशानवस्थाप्रसञ्जकपरिशेषानुमानादिग्राह्यताभ्युपगमे पराग्राह्यत्वे सति ग्राह्यत्वरूपपरिशेषानुमानसिद्धयर्थमुक्तं मूले (परग्राह्यत्वेऽनवस्थानादिति) तस्यानवस्थिताबच्छिन्नानुव्यवसायग्राहकत्वनाभयेन ज्ञानस्यानुव्यवसायग्राह्यत्वानङ्गीकारादित्यर्थः ।

पूर्वव्यवसाये विशेषदर्शनामूलके प्रामाण्यसंशये सति प्रामाण्यनिश्चयं विना नार्थनिश्चयो भवितुमर्हति, प्रामाण्यसंशयस्यार्थसंशायकत्वेन तत्संशयसामग्रीसत्त्वादतो निष्कम्पप्रवृत्त्यनुपपत्तिरिति प्रामाण्यनिश्चयस्य प्रवृत्त्युपयोगिता मूलाभिमता नोपपद्यते, धर्मिणि करादिदर्शनं विना तद्विशेष्यकत्वपुरुषत्वादिज्ञाने प्रामाण्यानुमापक करादिमद्विशेष्यकत्वमद्यासम्भवेन प्रामाण्यानुमित्यर्थमेव धर्मिणि करादिदर्शनस्यावश्यापेक्षतया तत एव पुरुषत्वादिसंशयनिवृत्त्या तन्निश्चयसम्भवात् ।

न च प्रामाण्यानिश्चये उदीच्येऽपि तद्धर्मिकपुरुषत्वादिज्ञाने प्रामाण्यशङ्कासम्भवात् निश्चयकार्यकारितेति वाच्यम्, यावद्धर्मिज्ञानादिविरुद्धेनाप्रामाण्यशङ्का तावदेव ततः प्रवृत्तिसम्भवाद्विशेषदर्शनमूलज्ञाने प्रामाण्यनिश्चयं विनाप्यप्रामाण्यशङ्कानुदयस्य सर्वसिद्धत्वात्;

[म] शयानवश्यम्भावात् । अन्यथा भट्टमते प्रामाण्यस्य ज्ञानानुमिति

[दी] अथ किमर्थं प्रामाण्यानुमितेरनुसरणम्, पुरुषत्वव्याप्यकरादिदर्शनेन पुरुषत्वसन्देहप्रतिबन्धादभिमतनिश्चयोत्पादस्याप्रत्यूहत्वात्, नहि करादेः पुरुषत्वव्याप्यत्वनिश्चयमन्तरेण करादिमति पुरुषत्वज्ञानत्वस्य प्रामाण्यव्याप्यतानिश्चयस्सम्भवति । अप्रयोजकत्वात् । करादेरदर्शने तु हेतोरसिद्धिः । अथ प्रामाण्यसंशयजन्यार्थसंशयस्सत्यपि विशेषदर्शने प्रामाण्यनिश्चयादेव निवर्तत इति तदनुसरणमिति चेन्न, न हि प्रामाण्यसंशयस्संशयसामान्ये तद्विशेषे वा हेतुः, व्यभिचारात्,

[ग] अन्यथा पूर्वज्ञान एव प्रामाण्यानुमित्या उत्तरनिश्चये तत्प्रामाण्यशङ्कास्कन्दनस्य भवतोऽपि दुर्वारत्वादिति पूर्वपक्षयति ( अथेत्यादिना ) ननु करादिदर्शनेऽपि करादेः पुरुषत्वव्याप्यतया यत्र न ग्रहस्तत्र प्रामाण्यानुमापकलिङ्गग्रहस्सम्भवति न त्वर्थसंशयविरोधिविशेषदर्शनम्, गृह्यमाणप्रामाण्यव्याप्तिकधर्मदर्शनस्यैव तथात्वादित्यत आह ( न हीति ) ( अप्रयोजकत्वादिति ) करादिमति पुरुषत्वज्ञानत्वस्य पुरुषत्ववति पुरुषत्वप्रकारत्वव्याप्यत्वं पुरुषत्वशून्ये करादिमत्त्वं विना नोपपद्यत इति तद्व्याप्यत्वे करादेः पुरुषत्वव्याप्तिभङ्गप्रसङ्गरूपस्य प्रकृतव्याप्तिग्राहकतर्कस्य करादौ पुरुषत्वाव्याप्यत्वरूपाभावव्यतिरेकनिश्चयं विना असम्भवेन व्यभिचारशङ्कया प्रकृतव्याप्तिनिश्चयासम्भवादित्यर्थः । करादौ पुरुषत्वव्याप्तिग्रहेऽपि धर्मिणि कराद्यदर्शनात्तत्र पुरुषत्वसंशयो भविष्यत्येवेत्यत आह ( करादेरदर्शने त्विति ) धर्मिणीत्यादिः । हेतोरसिद्धिः–करादिमद्विशेष्यकत्वस्य प्रामाण्यसाधकहेतोर्धर्मिणि पुरुषत्वाज्ञानरूपपक्षे ग्रहासम्भव इत्यर्थः । तथा च प्रामाण्यानुमितिरेव कथमिति भावः । मिश्रसमाधानमाशङ्क्य निराकरोति ( अथेति ) ( प्रामाण्यनिश्चयादेवेति ) प्रामाण्यसंशयरूपकारणविघटकादित्यादिः । प्रामाण्यसंशयस्यार्थसंशयहेतुतायामेव *प्रामाण्यसंशयजन्यत्वं संशयस्य* विशेषदर्शनाप्रतिबध्यत्वप्रयोजकमिति सम्भवदुक्तिकम्, सैव न सम्भवतीत्याह ( न हीति ) आद्ये पक्षे दोषमाह ( व्यभिचारादिति ) अर्थनिश्चयशून्यकाले विनापि प्रामाण्यसंशयं साधा-

[ग] प्राह्यत्वेनानवस्था स्यात् । गुरुमते च प्रामाण्यस्य स्वग्राह्यत्वं न स्व-

[दी] संशयत्रैविध्यव्याघातापत्तेः, प्रमात्वतदभावभ्रमत्वादभावादिसंशयानां मिथो व्यभिचारात्, सत्येकतरकोटिनिश्चये संशयानुपपत्तेश्च । अथ प्रामाण्यसंशयकालीनार्थसंशय एवार्थनिश्चयः प्रतिबन्धक इति चेत् ? तर्हि ताद्दशसंशयत्वेनापि जन्यता, यतस्तदवच्छिन्नं प्रत्यर्थनिश्चयस्य प्रतिबन्धकता स्यात् । एतेन विशेषादर्शनजन्य एव संशये विशेषदर्शनं प्रतिबन्धकमिति परास्तम्, संशयमात्रस्यैव विशेषादर्शनजन्यत्वाच्च ।

[ग] रणधर्मदर्शनात्तिस्संशयोत्पत्तेरिति भावः । साधारणधर्मदर्शनाद्यजन्य-संशयरूपे विशेषे हेतुना दूषयति ( संशयत्रैविध्येति ) साधारणधर्मदर्शना-दिसहकारिणैव अर्थनिश्चयकालीनार्थसंशयरूपविशेषे हेतुत्वमाशङ्क्य निरा-करोति ( प्रमात्वेति ) आदिना तद्भेदकोटिकसंशयपरिग्रहः । कथञ्चि-द्व्यभिचारवारणेऽपि अर्थनिश्चयकालेऽपि तत्प्रतिबन्धनार्थसंशय एव न सम्भवति, क्व प्रामाण्यसंशयहेतुतेति दूषयति ( सत्येकतरेति ) अप्रामाण्य-शङ्कानुत्तेजकीकृतार्थनिश्चयकाले तत्संशयोपपादने च प्रामाण्यसंशय-हेतुत्वमनर्थकमित्याशयः । अर्थनिश्चयदशायां तत्संशयस्यान्यथैवोपपत्ति-माशङ्कते ( अथेति ) ( प्रामाण्यसंशयकालीनेति ) एवञ्चैतादृशविशेषात्मा-त्मकस्यापि सामान्यकार्यस्य प्रसिद्ध्या विशेषान्तरे, प्रामाण्यसंशयहेतुत्वमा-वश्यकमिति भावः । संशयत्वस्य जन्यतावच्छेदकत्व एवैतत्सर्वं शोभते, तदेव न, तस्यार्थसमाजग्रस्तत्वादिति दूषयति (तर्हि मिति) (प्रतिबन्धकत्व-मिति ) प्रामाण्यसंशयस्य हेतुत्वञ्चेति शेषः । एतेत—संशयत्वस्य जन्यता-नवच्छेदकत्वेन ( विशेषदर्शनं प्रतिबन्धकमिति ) तथा च प्रामाण्यसंशयज-न्यसंशये विशेषदर्शनस्याहेतुतया न तस्य विशेषदर्शनप्रतिबध्यत्वमि-त्यभिमानः । उक्तत्यसम्भवमप्याह ( संशयमात्रस्यैवेति ) विशेषदर्शनाभाव-जन्यतावच्छेदककोटौ प्रामाण्यशङ्काजन्यत्वस्य उक्तयुक्त्या गौरवेण चाविशेषादिति भावः । मामूद्विशेषदर्शनरूपप्रतिबन्धकवशादुक्त-स्यैवेऽर्थसंशयस्तथापि प्रामाण्यानिश्चये तन्निश्चयरूपकारणनाधार्थ

[मि] ग्राह्यं स्वरूपप्रामाण्याभ्यां बहिर्भूतत्वात्; परग्राह्यत्वेऽनवस्थानात् किन्तु परिशेषानुमानेन प्रमाणान्तरेण वा ग्राह्यम्, तथा च तत्प्रामाण्यस्यापि स्वग्राह्यत्वमन्यैर्नैवेत्यनवस्थैव ।

[दी] अथ प्रामाण्यसंशयोत्तरार्थनिश्चये प्रामाण्यनिश्चयो हेतुरिति चेन्न, तादृशनिश्चयत्वेन जन्यतायां मानाभावात् । निश्चयसामान्यसामग्रीसत्त्वे सत्यपि प्रामाण्यसन्देहे तदुत्पादस्य दुर्वारत्वात्, न हि तदनुत्तरनिश्चयत्वेनापि जन्यता, तदवच्छिन्नं प्रति वा कस्यचित्किञ्चिद्रूपावच्छेदेन जनकता, मानाभावात्, महागौरवप्रसङ्गप्रतिहतत्वाच्च । एतेनाप्यर्थनिश्चयोत्तरार्थसंशयं प्रति प्रामाण्यसंशयस्य भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य च हेतुता प्रत्युक्ता । [ अत्र काचित्पङ्क्तिर्व्युच्छिन्ना * ]

अथ भवतामपि कथं सत्यप्यर्थनिश्चये सति च प्रामाण्यसंशये तत्संशय इति चेत्, अगृहीताप्रामाण्यस्यैव विशेषदर्शनस्य प्रति-

---

[ग] निश्चयोऽपि न सम्भवतीति तन्निश्चयानुसरणमित्याशङ्कते ( अथेति ) तादृशनिश्चयत्वेन प्रामाण्यनिश्चयजन्यतां स्वीकृत्यापि तत्र प्रामाण्यनिश्चयं विना निश्चयो दुर्वार इत्यत आह ( निश्चयसामान्येति ) तदुत्पादस्य—अर्थनिश्चयसामान्योत्पादस्य—ननु प्रामाण्यसंशयानुत्तरनिश्चये प्रामाण्यसंशयाभावस्य हेतुतया यावद्विशेषसामग्रीबाधेन प्रामाण्यसंशयदशायां न निश्चयापत्तिरित्यत आह ( न हीति ) ( मानाभावादिति ) निश्चयत्वस्यार्थसमाजग्रस्ततयाऽर्थनिश्चये प्रामाण्यसंशयदशायां विपरीतकोटिभानविरोधिविशेषदर्शनासत्त्वे विपरीतकोटेरपि भानसम्भवेन निश्चयत्वावच्छिन्नापत्त्यसम्भवेन तद्धारणान्यथानुपपत्तिरूपप्रमाणासम्भवादिति भावः । बाधकमप्याह ( महागौरवेति ) एतेन-प्रकृत इव विशेषकारणतया सामान्यधर्मावच्छिन्नापत्तेर्दुर्वारत्वेनेत्यर्थः । अधिकारेण संशयत्वनिश्चयत्वयोरर्थसमाजग्रस्ततया वक्ष्यमाणहेतुताया निर्युक्तिकत्वं सूचितम् ( प्रामाण्यसंशयस्येति ) हेतुतेत्यग्रिमेणान्वयः । प्रत्यक्षम्-प्रत्यक्षनिश्चयम् [*( व्याख्यातेति ) निर्युक्तिकत्वेनेत्यादिः × ] ( भवतामिति ) प्रतिबध्यतावच्छेदककोटौ प्रामाण्यसंशयाजन्यत्वमनिवेश्यैव

[दी] बन्धकत्वादिति गृहाण। अप्रामाण्यस्याननुगमात्तद्ग्रहाणामननुगमेऽपि न क्षतिः, प्रतिबन्धकतावच्छेदकाननुगमस्यादोषत्वात्। प्रकृते चागृहीताप्रामाण्यस्य करादिरूपविशेषदर्शनस्य सत्वान्न संशयसम्भवः।

---

[ग] अर्थसंशयसामान्ये तन्निश्चयस्य प्रतिबन्धकत्वबादिनामित्यर्थः। विशेषदर्शनस्य–विरोधिनिश्चयस्य। अप्रामाण्यस्य नानाविधभ्रमत्व प्रमात्वाभावरूपस्य। अननुगमात् अनतिप्रसक्तैकरूपेणोपादानासम्भवात्। तद्ग्रहाणामननुगमेऽपि एकरूपेणाभावस्य प्रतिबन्धकतावच्छेदककोटौ निवेशासम्भवेऽपि। न क्षतिः– तावदभावविशिष्टस्य प्रतिबन्धकत्वाद्विशेषणविशेष्यभावे विनिगमनाविरहेऽपि न क्षतिः। "प्रतिबन्धकतावच्छेदकाननुगमस्यादोषत्वाद्" इति पाठः। प्रतिबन्धकतावच्छेदकाननुगमस्य— तावदभावानां विशेष्यविशेषणभावे विनिगमनाविरहेण नानात्वस्य (अदोषत्वादिति) अन्वयेत्यादिः। "एकैकाभावविशिष्टस्य प्रतिबन्धकत्वात् प्रतिबन्धकतावच्छेदकाननुगमस्य वा दोषत्वाद्"इति क्वचित्पाठः॥ तत्पाठे, एकैकाभावविशिष्टस्येत्यस्य प्रत्येकरूपावच्छिन्नाभावकूटविशिष्टस्येत्येवार्थः। नानाविधाप्रामाण्यज्ञानानामेकत्राभावनिवेशासम्भवेऽपि अभावसमुदायस्यैकत्र निवेशे विशेष्यविशेषणभावे विनिगमनाविरहेण तन्निवेशासम्भवेऽपि च पृथक्पृथक् तत्तदप्रामाण्यज्ञानाभावविशिष्टत्वेन निश्चयस्य प्रतिबन्धकत्वादित्यर्थः। प्रतिबन्धकतावच्छेदकाननुगमस्य— सकलप्रतिबन्धकानामेकरूपेण सङ्ग्रहासम्भवस्य। अदोषत्वात्–तदभावानां हेतुत्वे व्यभिचाराप्रयोजकत्वात्। कार्यकारणभावनानात्वस्यागत्याऽदूषकत्वादिति यथाश्रुतव्याख्यानादरणीया, भ्रमत्वग्रहाभावविशिष्टत्वेन प्रमाभावग्रहाभावविशिष्टत्वेन च पृथक्प्रतिबन्धकत्वे प्रमात्वाभावमात्रग्रहाधीनसंशये प्रथमप्रतिबन्धकाभावस्य भ्रमत्वमात्रग्रहाधीनसंशये च द्वितीयविशिष्टाभावस्य व्यभिचारात्।

ननैव प्रामाण्यनिश्चये प्रामाण्यसंशयरूपोत्तेजकबलात् निश्चितस्याप्यर्थस्य संशयो भवेदेवेति कथं प्रामाण्यानुमितिवैयर्थ्यमित्यत आह (प्रकृते चेति) (अगृहीताप्रामाण्यस्येति) करा–

[म] यत्तु व्यवसायस्य प्रामाण्यनिश्चयादेव प्रवृत्तेर्न तस्यापि प्रामाण्यानुसरणमिति नानवस्था; न च प्रामाण्यसंशयादौचित्यावर्जितो विषयसंशय इति वाच्यम्, निश्चिते संशयाभावात्; अन्यथा स्वतोग्रहेऽपि संशयेऽनवस्थेति। तदसत्—यदि हि प्रामाण्यसंशयान्न विषये संशयो निश्चितत्वात्, तदा विषयनिश्चयार्थं प्रामाण्यनिश्चयो व्यर्थः, प्राथमिकविषयनिश्चयादेव निष्कम्पप्रवृत्त्युपपत्तेः। न हि विषयसंशयमनादृत्य प्रामाण्यनिश्चयः प्रवृत्तिहेतुरित्युक्तम्। अन्यसंशयादन्यत्र निश्चिते कथं संशय इति चेदनुभवं पृच्छ, येन स्वसाक्षिकमेव प्रामाण्यसंशयस्य विषयसंशयहेतुत्वमनुमतम्। ज्ञानविषयत्वमपि प्रामाण्यसंशयमासाद्य विषयसंशायकम्। ननु लिङ्ग-पक्ष-व्याप्त्यादीनां ज्ञानस्य प्रामाण्यावधारणेऽनवस्था, अनवधारणे हेत्वसिद्धिः। अथ लिङ्गादिज्ञानं स्वविषयावधारणे कर्त्तव्ये स्वप्रामाण्यज्ञानं नापेक्षते, अनुमानमात्रोच्छेदप्रसङ्गात्; लिङ्गादिनिश्चयस्य च स्वकारणाधीनस्य सर्वसिद्धत्वादिति चेन्न—प्रामाण्यसंशयेन लिङ्गस्यापि सन्देहात्। न हि न लिङ्गज्ञाने प्रामाण्यसंशयः, अविरोधादिति। उच्यते, अप्रामाण्यशङ्काकलङ्काभावे लिङ्गादिज्ञानस्यैवार्थनिश्चायकत्वात्, तत्कलङ्के तूक्तैव गतिः। यत्तु व्यवसाये क्वचिदप्रामाण्यशङ्का भवति क्वचिन्नेति त्वयापि वक्तव्यम्। एवं बहुवित्तव्ययायाससाध्ये स्वर्गसाधनं याग इति ज्ञानं न गृहीतप्रामाण्यं प्रवर्त्तकम्, प्रामाण्यानुमितेः पूर्वमेव तस्य विनाशात्; किन्तु तज्ज्ञानसमानविषयकमप्रामाण्यशङ्काशून्यं ज्ञानान्तरमेव। नन्वेवं बहुवित्तव्ययायाससाध्ये निष्कम्पप्रवृत्तावनुपयोगित्वात् निष्फलं प्रामाण्य-

[मू]ज्ञानमिति किं तदुपायानुसरणेनेति चेन्न स्वर्गसाधनं याग इति ज्ञानप्रामाण्ये निश्चिते तत्समानविषयकज्ञानान्तरे अप्रामाण्यशङ्का न भवतीति ज्ञानान्तरमगृहीतप्रामाण्यमपि स्वार्थनिश्चयरूपं निष्कम्पप्रवृत्तिं जनयतीत्यप्रामाण्यशङ्काप्रतिबन्धद्वारा निष्कम्पप्रवृत्तावुपयुज्यते प्रामाण्यज्ञानमिति न निष्फलम्। यत्त्वनुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यग्रह इत्युक्तम्,

---

[दी] अत्र वदन्ति, स्वतःसिद्धव्यभिचारादर्शनात् करादेः पुरुषत्वव्याप्यताग्रहेण ( वा ) गृहीतायाः करादिमति पुरुषत्वादिज्ञानरूपस्य प्रामाण्यव्याप्यतायाः स्मरणात्प्रामाण्यानुमिति.

---

[ग] दिदर्शने अप्रामाण्यग्रहे अप्रामाण्यज्ञानानास्कन्दितकरादिमद्विशेष्यकत्वरूपहेतुग्रहाभावेन प्रामाण्यानुमितिरेवासम्भवादिति भावः । (स्वतःसिद्धेति) करादौ पुरुषत्वादिव्यभिचारशङ्कानिरासार्थं तर्कान्तरानुसरणेऽनवस्था स्यादिति भावः । व्याप्यताग्रहेण—व्याप्यताग्रहाधीनतर्केन ।

यद्यपि करादौ पुरुषत्वव्याप्यत्वाग्रहेऽपि स्वतःसिद्धव्यभिचाराज्ञानात् करादिमद्विशेष्यकत्वे प्रामाण्यव्याप्यताग्रहसम्भवति, तथापि तथा प्रामाण्यग्रहोपगमे पुरोवर्तिविशेष्यकत्वेऽपि स्वतःसिद्धव्यभिचाराग्रहात् प्रामाण्यव्याप्यताग्रहसम्भवेन विनैव करादिदर्शनं प्रामाण्यानुमितिसम्भवात् करादिदर्शनानुसरणमनर्थकं स्यादिति तन्निर्वाहायैव मूलकृता करादिमद्विशेष्यकत्वहेतुकत्वमित्याशयेन करादौ पुरुषत्वव्याप्यताग्रहानुसरणम् । क्वचिद्व्याप्यताग्रहेण वेति वाकारसवलित पाठः, तथा सति स्वतःसिद्धव्यभिचारादर्शनादिति गृहीतायाः प्रामाण्यव्याप्यताया इत्यनेनान्वितम् । स्वतःसिद्धव्यभिचाराग्रहेण प्रामाण्यव्याप्तिग्रहोपगमे उक्तरीत्या करादिदर्शनानुसरणवैयर्थ्यात् कल्पान्तरानुसरणम् ( प्रामाण्यव्याप्यतायाः स्मरणादिति ) तद्व्याप्यताया अनुभवकाले तद्ग्राहकतर्कनिर्वाहकस्य करादौ पुरुषत्वव्याप्यताग्रहस्यासत्त्वेन तत एव पुनर्ग्रहसम्भवनिवृत्तिसम्भव इति स्मरणानुसरणम्।

[दी] करादेः पुरुषत्वव्याप्यत्वादेर्विस्मरणात् न च तद्दर्शनात्पुरुषत्वसंशयप्रतिरोधः ।

अथ प्रामाण्यस्यानुमापकः तद्व्याप्यवत्तापरामर्श एवास्तु तत्संशयोच्छेदक इति कृत तदनुमित्या । परामर्शस्योदीच्यज्ञानाविषयत्वं पुनरनुमितावपि समानम् ।

---

[ग] ननु प्रामाण्यलिङ्गतद्व्याप्यत्वस्मरणकाले करादौ पुरुषत्वव्याप्तिर्विनिश्चितायाश्च पूर्वानुमतायाः स्मरणसम्भव इति तत एव पुरुषत्वसंशयनिवृत्तिर्भवेदित्यत आह ( करादेरिति ) 'व्याप्यत्वादे' रित्यादिना धर्मिसम्बन्धपरिग्रहः । विस्मरणात्—संस्कारनाशेनोद्बोधकविरहेण वा स्मरणाभावात् ।

( न च तद्दर्शनादिति ) संशयप्रतिबन्धककरादिग्रहासम्भवादिति भावः । तथा च तत्र प्रामाण्यानुमितिं विना प्रामाण्यसंशयानिवृत्तेर्लौकिकसामग्रीं विना पुरुषत्वग्राहकसामग्रीतः तस्य संशय एव स्यान्न तु निश्चय इति तन्निश्चयार्थं प्रामाण्यानुमित्यनुसरणम् ।

नच प्रामाण्यस्य निश्चयेऽपि विपरीतकोटिभानविरोधिनोऽसत्त्वेऽर्थसंशयः स्यादेव, निश्चितप्रामाण्यकव्यवसायश्च न तावत्कालस्थायीति न ततो विपरीतभाननिवृत्तिरिति वाच्यम्, यद्धर्मिविशेष्यकार्थनिश्चये प्रामाण्यग्रहस्तत्र तत्प्रकारकप्रमाविषयत्वरूपतद्धर्मव्याप्यवत्त्वस्यैव तदभावभाननिवर्तकत्वादिति भावः ।

( तत्संशयोच्छेदक इति ) विशेषदर्शनविधया प्रामाण्यसंशयप्रतिबन्धक इत्यर्थः ( अनुमितावपि समानमिति ) अनुमितेः स्वजनकपरामर्शसमानविशेष्यकत्वनियमादिति भाव । एवञ्च धर्मितावच्छेदकावच्छेदेन विरोध्यवगाहिनिश्चयोऽसमानविशेष्यकोऽपि संशयविरोधीति वाच्यम्, तथा च परामर्शेऽपि तथात्वे उदीच्यव्यवसाये संशय विरुद्धत्वादेवेति भाव ।

[ दी ] अत्राहुः, पक्षतावच्छेदकपुरोवर्तिविशेष्यकत्वावच्छेदेन प्रामाण्यानुमाने उत्तरज्ञानस्यानुव्यवसाये पुरोवर्तिविशेष्यकत्वग्रहात्, अन्यथा तु धर्मिज्ञानविरहान्न संशय इति ।

---

[न] उत्तरज्ञानस्य–पुरोवर्तिविशेष्यकोदीच्य व्यवसायस्य । ( पुरोवर्तिविशेष्यकत्वेति ) प्रामाण्याभावावच्छेदकेत्यादि । अन्यथा तदनुव्यवसायानुदयेन उदीच्यज्ञाने संशयः प्रामाण्यस्य पुरोवर्तिविशेष्यकत्वावच्छेदेन प्रामाण्यव्याप्यवत्ताग्रहस्तूदीच्यज्ञाने संशयनिवृत्तावनुपयुक्त, तदभावव्याप्य याप्यस्येव तदभावव्याप्यावच्छेदकधर्मस्यापि ग्रहस्य तद्वत्ताज्ञानाप्रतिबन्धकत्वादिति भाव ।

नच–तदवच्छेदेन प्रामाण्यग्रहविशिष्टतद्वत्ताग्रहः प्रामाण्यसंशय विरोधी, तथा चानुव्यवसायेन पुरोवर्तिविशेष्यकत्वग्रहेऽपि तदानीं प्रामाण्यस्मरण विना नाप्रामाण्यसंशयनिवृत्तिरिति तत्स्मरण स्वीकार्यम्, तथा च तदानीं पुरोवर्तिविशेष्यकत्वावच्छेदेन प्रामाण्यव्याप्यवत्त्वस्याप्यनुमित्यर्थं पूर्वानुभूतस्य स्मरणसम्भवेन ततोऽपि पुरोवर्तिविशेष्यकत्व धर्मिताव्वच्छेदकीकृत्य प्रामाण्यसंशयस्य निवृत्तिसम्भव इति किं प्रामाण्यानुमित्येति वाच्यम् । पुरोवर्तिविशेष्यकत्वावच्छेदेन प्रामाण्यव्याप्यवत्तास्मरणात् । पुरोवर्तिविशेष्यकत्वावच्छिन्न धर्मिकप्रामाण्यसंशय, निवृत्तावपि ज्ञाननिष्ठेदन्त्वावच्छिन्नधर्मिकप्रामाण्यसंशयनिवृत्तेस्ततोऽनिर्वाहात् तदर्थं प्रामाण्यानुमिते पूर्वमवश्यमङ्गीकरणीयत्वात् पूर्वं पुरोवर्तिविशेष्यकत्वावच्छेदेन प्रामाण्यानुमितौ ज्ञाननिष्ठेदन्त्वावच्छिन्ने पुरोवर्तिविशेष्यकत्वावगाहिनोऽनुव्यवसाय त् तदवच्छिन्नविशेष्यकसंशयनिवृत्तिसम्भवात् ।

नच–पुरोवर्तिविशेष्यकत्वधर्मितावच्छेदककप्रामाण्यसंशय पुरोवर्तिविषयसंशयप्रयोजक इति प्रामाण्यव्याप्यवत्तास्मरणात् तन्निवृत्त्यैव पुरोवर्तिनि विषयसंशयनिवृत्तेः ज्ञाननिष्ठेदन्त्वधर्मितावच्छेदकक

[मं] ननु–धूमवति वह्निज्ञानत्वमनुमितेः प्रामाण्यनियतमनुव्यवसायेनोपनीतम्, अतो विशेषदर्शनाच्च तत्राप्रामाण्यशङ्केति, प्रामाण्यनिश्चयादेवाप्रामाण्यशङ्काविरहादर्थं निश्चित्य निष्कम्पप्रवृत्तार इत्यभिप्रायः। वस्तुतस्तु परतः पक्षे न काचिदपि

[दी] अनुमित्युपनीतप्रामाण्यस्यानुव्यवसायेनोदीच्यज्ञाने, ग्रहणं पुनरेकद्व्यादिक्षणान्तरितजन्मनि तस्मिन् सुतरामसम्भवि।

[प्र] प्रामाण्यसंशयनिवृत्तिरनपेक्षितेति वाच्यम्। पुरोवर्त्तिविशेष्यकत्वस्य प्रामाण्यसंशयधर्मितावच्छेदकत्वेऽपि प्रामाण्याभावे भ्रमत्वे वा पुरोवर्त्यंशावच्छिन्नत्वावगाहिसंशयादेव पुरोवर्त्तिनि विषयसंशयसम्भवात्, तद्धर्मावच्छेदेन भावाभावावगाहिसंस्कारविशिष्टतद्धर्मवत्ताग्रहस्य संशयविरोधित्वे तु प्रामाण्यस्मरणं विनैवोपपत्तिः।

न चोदीच्यज्ञाने प्रामाण्यसंशयस्यानिवृत्तावपि प्रामाण्यसंशये अनुत्पन्न एव अतः प्रवृत्तिर्निर्वहतीति किन्तत्र तन्निवर्त्तनेनेति वाच्यम्। यत्र कारणान्तराभावात् सादृशज्ञानात् प्रवृत्तिः तत्र सादृशज्ञाने प्रामाण्यशङ्कानुदये ततो विपरीतकोटिभाननिवृत्तौ निश्चयान्तरनिर्वाहेण ततः प्रवृत्तिनिर्वाह इति तत्र तन्निवृत्तेरपेक्षणात्, प्रामाण्यस्य—पूर्वमनुमितौ तदुपनीतप्रामाण्यस्योदीच्यज्ञानानुव्यवसायेन तज्ज्ञाने ग्रहणात् तज्ज्ञाने प्रामाण्यशङ्कानिवृत्तिः। व्याप्यवत्तापरामर्शस्य च सामग्रीबलसिद्धानुमित्या विनाशात् नोदीच्यव्यवसायपर्यन्तस्थितिरिति न तदुपनीतव्याप्यवत्त्वस्योदीच्यज्ञानानुव्यवसाये भानसम्भव इति मतं दूषयति (अनुमित्युपनीतेति) (एकद्व्यादिक्षणान्तरितजन्मनि तस्मिन्निति) प्रामाण्यानुमितितृतीयादिक्षणजातव्यवसाय इत्यर्थः। (सुतरामसम्भवीति) तदनुव्यवसायपूर्वं प्रामाण्यानुमितेरसत्त्वादिति भावः। विनश्यदवस्थपरामर्शजन्यानुमितेरनुव्यवसाये परामर्शोपनीतधूमवत्त्वस्य विशेष्यांशेन भानसम्भवः, तत्पूर्वपरामर्शनाशात्; एवं धर्मितावच्छेदकधर्मवद्विशेष्यकत्वावच्छेदेनैव विशेषणप्रकारकत्वमनुव्यवसायो गृह्णातीति चौद्याधिकारनिवृत्तौ स्वयं

प्रामाण्यग्रहः प्रवर्त्तक इति । एवमनुव्यवसायस्य प्रामाण्
यतत्वाच्च प्रामाण्यशङ्का । न ह्यजानन् जानामीति
न वा घटज्ञाने पटं जानामीति । भ्रमेऽप्यनुव्यवसायेन
तत्वादिकं व्यवसायप्रकारत्वेनोल्लिख्यते तथैव । यत्त्वभ
सदशायां झटिति प्रचुरतरनिष्कम्पप्रवृत्तिदर्शनात् प्राम
स्वत एव गृह्यते, अन्यत्र तु परत इति, तन्न विशेष्यनिष्ठा
न्ताभावप्रतियोगिप्रकारानवच्छिन्नत्वादिकं प्रामाण्यं स्व
गृहीतुमशक्यमिति परत एव गृह्यते । झटिति प्रवृत्तिस्तु क
चरणादिमति शरीरज्ञानत्वादेर्विशेषस्यानुव्यवसायेन ग्रहा
प्रामाण्यशङ्काशून्याद्व्यवसायादेव, न प्रामाण्यज्ञानं प्रवर्त्तक
त्युक्तम् । झटिति तत्समवधानन्तु स्वकारणाधीनम् । न
पिपासूनां झटिति प्रचुरतरा समर्था च प्रवृत्तिरम्भसीति
पिपासोपशमनशक्तिरस्य प्रत्यक्ष, इति ।

इति श्रीमन्महोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे प्रामाण्यवादे ज्ञप्तिवादः ॥

---

[दी] ' धूमवती ' त्यादिकं लिङ्गोपहितलैङ्गिकभानपक्षे ।

इति श्रीमहामहोपाध्याय रघुनाथशिरोमणि भट्टाचार्यस्य कृतौ
प्रत्यक्षमणिदीधितौ प्रामाण्यवादे सिद्धान्तरहस्ये
ज्ञप्तिवाद• ॥

---

[ग] लिखितम् , तथा सति अनुमितौ साध्यव्याप्यस्य पर्यवसितावच्छेदकत्व
माने तद्वति साध्यप्रकारकत्वस्यानुमित्यनुव्यवसाये भान न सम्भवति, अतो
लिङ्गोपधानमतावलम्बनेन मूलोक्त तदुपपादयति ( धूमवतीत्यादि ) ।

इति श्री महामहोपाध्याय गदाधरभट्टाचार्य विरचिते
प्रत्यक्षमणिदीधिति व्याख्याने प्रामाण्यवादे सिद्धान्तरहस्ये
ज्ञ प्ति वा द ॥

---

## ल्यां—श्रीसुदर्शनमुद्रायन्त्रालये क्रय्याणि पुस्तकानि.

| नाम | रु | आ |
|---|---|---|
| **वैदिक ग्रन्थाः ।** | | |
| . श्रीसूक्तभाष्यम् | ० | २ |
| .. पुरुषसूक्तभाष्यम् | १ | ० |
| ३. तैत्तिरीयोपनिषद्भाष्यम् | ३ | ० |
| ३. सन्ध्यावन्दनभाष्यम् | ० | ८ |
| **वेदान्त ग्रन्था ।** | | |
| ५. शतदूषणी भा—१ | ४ | ६ |
| ६. शतदूषणी भा-२ | ३ | १२ |
| ७. शतदूषणी भा—३ | ३ | १९ |
| ८. शतदूषणी भा-४ | ३ | १२ |
| ९. भगवद्गीता प्रतिपदार्थविवरणसहिता | २ | २ |
| १०. भगवद्गीता-वरवरमुनिव्याख्यासहिता | २ | ४ |
| ११ गीतार्थसंग्रहः-रक्षयासहितः | ० | ६ |
| १२. तत्त्वनिर्णयः (शैववैष्णववादः) | ० | ४ |
| १३. सिद्धान्तचिन्तामणिः | ० | १२ |
| १४. पाराशर्यविजयः (प्रथमाध्यायप्रथमपादः) | ४ | ० |
| १५. वेदान्तविजयः [गुरुविद्याविजयः,ब्रह्मविद्याविजयः,सद्विद्याविजयः,अद्वैतविद्याविजयः,परिकरविजयः] | (यन्त्रस्थः) | |

| नं | नाम | रु | आ |
|---|---|---|---|
| १६. | यतिलिङ्गसमर्थनम् | ० | ४ |
| १७. | प्रपन्नपारिजातः | ० | ४ |
| १८. | न्यायभास्करः (जगन्मिथ्यात्वखण्डनम्) | १ | ८ |
| १९. | भेदवादःतत्क्रतुन्यायविचारश्च | ० | ४ |
| २०. | दृश्यत्वानुमाननिरासवादःमोक्षकारणतावादश्च | ० | ४ |
| २१. | कार्याधिकरणवादःभा१ | ० | १० |
| २२. | कार्याधिकरणवाद.भा२ | १ | ० |
| २३. | कार्याधिकरणतत्त्वम् | ० | १४ |
| २४. | श्रीरामानुजसिद्धान्तसारः | १ | ० |
| २५. | श्रुतितात्पर्यनिर्णयः (यन्त्रस्थः) | | |
| | **मीमांसा ग्रन्थाः ।** | | |
| २६. | भाट्टरहस्यम् | १ | ८ |
| २७. | मीमांसापादुका | ० | ७ |
| २८. | मीमांसाकौस्तुभःभा१ | १ | ४ |
| २९. | मीमांसाकौस्तुभःभा४ | १ | ६ |
| ३०. | मीमांसाकौस्तुभ.भा५ | १ | ६ |
| ३१. | सेश्वरमीमांसा | १ | १४ |
| | **न्याय ग्रन्थाः ।** | | |
| ३२. | प्रामाण्यवादः | ३ | ४ |
| ३३. | अवच्छेदकतानिरुक्तिः | ० | १४ |

| नं | नाम | रु | आ |
|---|---|---|---|
| ३४. | बाधगादाधरी | ० | १५ |
| ३५. | मूलगदाधरीये शब्दखण्ड | १ | ४ |
| ३६. | उपाधिवाद गदाधरस्य | २ | ० |
| ३७. | गादाधरी चतुर्दशलक्षणी | १ | १४ |
| ३८. | गादाधरी पञ्चलक्षणी | ० | ८ |
| ३९. | सिद्धान्तलक्षणम् | १ | ४ |
| ४०. | पक्षता-गादाधरी | १ | ८ |
| ४१. | व्युत्पत्तिवाद | २ | ८ |
| ४२ | సవ్యభిచారసామాన్య నిరుక్తి | ౧ | ౦ |
| ४३. | सामान्यनिरुक्ति | ० | १२ |
| ४४. | पदवाक्यरत्नाकर | २ | ८ |
| ४५ | సాధారణాసాధారణ అనుపసంహారిగ్రంథ | ౧. | ౦ |
| ४६ | तत्वचिन्तामणौ अवयवग्रन्थ | १ | ० |
| ४७ | सत्प्रतिपक्षग्रन्थ | ० | १४ |
| ४८. | शतकोटि | ० | ६ |
| ४९ | शतकोटिखण्डनम् श्रीकृष्णताताचार्यवि | ० | ६ |
| ५० | शतकोटिमण्डनम् श्रीमदनन्ताचार्यवर्यकृतम् | ० | १२ |
| ५१. | शतकोटिमण्डनम् विजयराघवाचार्यवि. | १ | ० |
| | **पाञ्चरात्र ग्रन्था ।** | | |
| ५२. | सात्वतसंहिता | २ | ८ |
| ५३. | ईश्वरसंहिता | ७ | ८ |
| ५४. | पारमेश्वरसंहिता सव्याख्या | १० | ० |
| | **सम्प्रदाय ग्रन्था. ।** | | |
| ५५. | तत्वत्रयम् | ० | ४ |
| ५६ | मुमुक्षुप्पडिरहस्यम् | ० | ४ |
| ५७. | श्रीवचनभूषणम् | ० | ८ |
| ५८. | श्रीवादिभीकरवैभवम् [सचित्रम्] | ० | ६ |
| ५९ | श्रीवादिभीकरवैभवम् [चित्ररहितम्] | ० | ४ |
| ௬0. | [illegible] | 0 | 8 |
| ౬౧ | [illegible] | ౦ | ౨ |
| 62 | அருளிச்செயல் [illegible] | 0 | 4 |
| ౬3. | ముక్తభోగావళి | ౦ | ౨ |
| ౬౪. | [illegible] | ౦ | ౧౨ |
| 65 | [illegible] | 1 | 8 |
| 66 | விசிஷ்டாத்வைத [illegible] | 0 | 2 |
| 67 | [illegible] | அச்சில | |
| 68 | [illegible] | ,, | |
| 69 | வேதம் | 2 | 0 |
| 70. | [illegible] | 0 | 2 |

| नं | नाम | रु | आ |
|---|---|---|---|
| | **आख्यायिकाः।** | | |
| ७१. | संसारचक्रम् भा १ | १ | ० |
| ७२. | संसारचक्रम् भा २ | ० | १२ |
| ७३. | युगलांगुलीयम् | ० | ६ |
| ७४. | श्रीबदरिकाश्रमयात्रा वृत्तान्तः | ३ | ० |
| | **पुराण ग्रन्थाः।** | | |
| ७५. | काशीमाहात्म्यम् | १ | १२ |
| ७६. | [illegible] | | [illegible] |
| ७७. | [illegible] | | [illegible] |
| ७८. | महाभारते शान्तिपर्व. [यन्त्रस्थ] | | |
| ७९. | हरिवंशोत्पधर्मः [यन्त्रस्थ] | | |
| | **दिव्यप्रबन्ध व्याख्यान ग्रन्थाः।** | | |
| 80. | [illegible] | 5 | 0 |
| 81. | [illegible] | 5 | 0 |
| 82. | [illegible] | 5 | 0 |
| | **कोश ग्रन्थाः।** | | |
| ८३. | लिङ्गनिर्णयभूषणम् | ० | २ |
| | **इतर ग्रन्थाः।** | | |
| ८४. | वाल्मीकिभावदीपः | १ | ० |
| ८५. | विष्णुसहस्रनामस्तोत्रम् | ० | २ |
| ८६. | लक्ष्मीसहस्रनामस्तोत्रम् | ० | २ |
| ८७. | सुभाषितकौस्तुभ. | ० | ४ |
| ८८. | सप्तभङ्गीतरङ्गिणी [जैनग्रन्थः] | ० | १० |
| ८९. | सर्वदर्शनशिरोमणि. | ० | ३ |
| ९०. | भस्मधारणविचारः | ० | २ |
| ९१. | परतत्त्वनिर्णय | ० | २ |
| 92. | [illegible] | 0 | 4 |
| 93 | *Journal of P B. Mull* | Free | |
| 94 | *History* ,, ,, ,, ,, | Free | |
| 95. | [illegible] | 0 | 4 |
| ९६. | दुर्वादविधूननम् | ० | ८ |
| ९७. | [illegible] | ० | [illegible] |
| 98. | [illegible] | 0 | 4 |
| ९९. | पद्यानल· | ० | ८ |
| १०० | अन्तर्व्याप्तिबहिर्व्याप्ति विचार· | ० | – |

| नं | नाम | रु | आ |
|---|---|---|---|
| १०१. | ऐकशास्त्रचमीमांसा | ० | ८ |
| १०२. | [illegible] | ० | [illegible] |
| १०३ | सुदर्शनमीमांसा | ० | १० |
| 104. | [illegible] | 2 | 8 |
| १०५ | श्रीवैष्णवमतदूषणोद्धार | १ | ० |
| १०६. | [illegible] | [illegible] | [illegible] |
| १०७. | भोजनकुतूहलम् [यन्त्रस्थ] | | |
| १०८. | श्रीमाध्वविमर्शनपरीक्षा | ० | ६ |

**हिन्दी भाषा की पुस्तकें ।**

| नं | नाम | रु | आ |
|---|---|---|---|
| १०९. | यतिराजवैभव | ० | ६ |
| ११०. | उपनयनगायत्रीमीमांसापरीक्षा | ० | ६ |
| १११. | चक्रधारणप्रमाणसंग्रह | ० | ४ |
| ११२. | श्रीरामानुजसम्प्रदाय की प्राचीनता | ० | १ |
| ११३. | विशिष्टाद्वैतसिद्धान्तसारसंग्रह | ० | १ |
| ११४. | चक्रधारण क्यों करना चाहिये | ० | १ |
| ११५. | सन्ध्यावन्दनविधि | ० | २ |
| ११६. | व्रतोत्सवनिर्णय | ० | २ |
| ११७. | तत्वोद्बोधन | ० | ४ |
| ११८. | मिथ्याआक्षेपोंकानिरास | ० | २ |
| ११९. | तिरुप्पल्लाण्डु | ० | ४ |
| १२०. | ऊर्ध्वपुण्ड्रधारणविधि | ० | १ |
| १२१. | श्रीपराशरविशिष्टपरमधर्मशास्त्र | ० | १२ |
| १२२ | वेदान्तरहस्य | ० | ४ |
| १२३. | श्रीशाण्डिल्य विशिष्टपरमधर्मशास्त्र | ० | १२ |
| १२४. | तप्तमुद्राधारण पर निर्णयसिन्धुकारकाफैसला | ० | ३ |
| १२५. | दिव्यदेश विवेचन | ० | १ |
| १२६. | द्वन्द्वयुद्धसर्म क्षा | ० | १२ |
| १२७. | वैदिकसर्वस्वकाविशेषाङ्क | १ | ८ |
| १२८. | अद्वैतविवेचन | १ | ४ |
| १२९. | सत्यार्थप्रकाश और श्रीवैष्णवसम्प्रदाय | ० | ६ |
| १३०. | श्रीभगवदाराधनविधि | ० | २ |
| १३१. | तुलसीमाहात्म्यदीपिका | ० | ४ |
| १३२. | पुरुषसूक्त (सटीक) | | |
| १३३. | श्रीसूक्त ,, | | |
| १३४. | ईशावास्योपनिषत्(सटीक) | | |

प्राप्तिस्थानम्—
श्रीसुदर्शनमुद्रायन्त्रालय,
Conjeeveram. (*Madras.*)